Rajaram-tukaramtaty abhikhye
शाकलर्कसंहिता सपरिशिष्टा
Shaakakriksamhilā saparishista
Sanskrit
Paper — Printed
san 1900 (118 years old)
808 Folio
8.6" x 4.8"
Complete

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

॥ श्रीः ॥

इदं शाकलर्क्संहितायाः तृतीयावृत्तिमुद्रणम् । अस्याः व्याकरणरीत्या यत्रयत्र परसवर्णः आवश्यकोऽस्ति तत्रतत्र स कृत एव । प्रथमावृत्तौ तु केवलो मन्त्रपाठ एव संगृहीत आसीत् । किं तु "अविदित्वा ऋषिच्छन्दोदैवतं योगमेव च । योऽध्यापयेज्जपेद्वापि पापीयाञ्जायते तु सः ॥ १ ॥ ऋषिच्छन्दोदैवतानि ब्राह्मणार्थस्वरानपि । अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते" ॥ २ ॥ इति स्मरणात्, "स्वरो वर्णोऽक्षरं मात्रा विनियोगोऽर्थ एव च । मन्त्रं जिज्ञासमानेन वेदितव्यं पदेपदे ॥ १ ॥ मन्त्राणा दैवतं छन्दो निरुक्तं ब्राह्मणानृषीन् । कृत्तद्धितादींश्चाऽज्ञात्वा यजन्ते यागकण्टकाः" ॥ २ ॥ इत्यन्यत्रोक्तेः, "ऋष्यादिकं परिज्ञाय यजेद्यज्ञमतंद्रितः" इति नृसिंहपुराणाच्च,-ऋषिच्छन्दआदिज्ञानं विना यतोऽग्निहोत्रादिविश्वसृजामयनान्तश्रौतकर्मणो निषे-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

॥ श्रीः ॥

इदं शाकलर्क्संहितायाः तृतीयावृत्तिमुद्रणम् । अस्याः व्याकरणरीत्या यत्रयत्र परसवर्णः आवश्यकोऽस्ति तत्रतत्र स कृत एव । प्रथमावृत्तौ तु केवलो मन्त्रपाठ एव संगृहीत आसीत् । किं तु "अविदित्वा ऋषिच्छन्दोदैवतं योगमेव च । योऽध्यापयेज्जपेद्वापि पापीयाञ्जायते तु सः ॥ १ ॥ ऋषिच्छन्दोदैवतानि ब्राह्मणार्थस्वरानपि । अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते" ॥ २ ॥ इति स्मरणात्, "स्वरो वर्णोऽक्षरं मात्रा विनियोगोऽर्थ एव च । मन्त्रं जिज्ञासमानेन वेदितव्यं पदेपदे ॥ १ ॥ मन्त्राणा दैवतं छन्दो निरुक्तं ब्राह्मणानृषीन् । कृत्तद्धितादींश्चाऽज्ञात्वा यजन्ते यागकण्टकाः" ॥ २ ॥ इत्यन्यत्रोक्तेः, "ऋष्यादिकं परिज्ञाय यजेद्यज्ञमतंद्रितः" इति नृसिंहपुराणाच्च,-ऋषिच्छन्दआदिज्ञानं विना यतोऽग्निहोत्रादिविश्वसृजामयनान्तश्रौतकर्मणो निषे-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कादिश्मशानान्तस्मार्तकर्मणाञ्च प्रसिद्धिरध्ययनसाफल्यं च न भवति, अतो द्वितीयावृत्तिमुद्रणवदेत त्तृतीयावृत्तिमुद्रणेऽपि भगवताकात्यायनेन प्रणीतस्य सर्वानुक्रमस्य सूक्तप्रतीकर्क्संख्यार्षिदैवतच्छन्दः प्रदर्शकस्य खण्डः प्रत्यध्यायं संगृहीतः। तथा चाध्येतॄणां सर्वानुक्रमपरिभाषाज्ञानं विना तत्तत्सूक्त-गतर्षिच्छन्दोदैवतादिज्ञानं न सुलभमिति सूक्तारम्भे परिभाषानुसारतः सूक्तप्रतीकर्क्संख्यार्षिदैवत-च्छन्दांसि सर्वत्र संगृहीतानि ॥ किं चैतन्मुद्रणसमाप्तिकाले बहुभिर्विद्वज्जनैः परिशिष्टमुद्रणार्थं महता निर्बन्धेन सूचना कृता। तदनुसारेण सर्वेषामपि परिशिष्टानामत्रान्त्यभागे मुद्रणं कृतम्। किं त्वेतस्यामावृत्तावेतावति ग्रन्थेऽधिकेऽपि यावच्छक्यं च संस्करणाधिक्येऽपि ग्रन्थमुद्रणव्यय-मात्रपरिमितं मूल्यं पूर्ववद्रूपकचतुष्टयमेवाध्येतॄणामाशीराशासनमात्रलाभलिप्सया परिक्लृप्तमित्या-दरणीयमेतत्पुस्तकं विद्वज्जनैरित्यलं पल्लवितेन।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

॥ श्रीः ॥

अथ ऋग्वेदाम्नाये शाकलके सूक्तप्रतीकऋक्संख्याऋषिदैवतच्छंदांस्यनुक्रमिष्यामो यथोपदेशं नह्येतज्ज्ञानमृते श्रौतस्मार्तकर्मप्रसिद्धिर्मन्त्राणां ब्राह्मणार्षेयच्छन्दोदैवतविद्याजनाध्यापनाभ्यां श्रेयोधिगच्छतीत्येताभ्यामेवानेवंविदोयातयामानि छन्दांसि भवन्ति स्थाणुं वर्च्छति गर्तं वा पासते प्रमीयते वा पापीयान् भवतीति विज्ञायते ॥ १ ॥ अथ ऋषयः शतर्चिनआद्ये मण्डलेन्त्येक्षुद्रसूक्तामहासूक्तामध्यमेषु माध्यमाः क्वचित्कथंचिदविशेषितं ब्रह्मऋषिमक्षियमनुक्तगोत्रमाङ्गिरसं विद्याद्यस्य वाक्यं सऋषिर्यातेनोच्यते सा देवतार्थेप्सवऋषयोदेवताश्छन्दोभिरभ्यधावंस्तिस्रएव देवताः क्षित्यन्तरिक्षद्युस्थानाअग्निर्वायुः सूर्यइत्येवं व्याहृतयः प्रोक्ताव्यस्ताः समस्तानां प्रजापतिरोंकारः सर्वदेवत्यः पारमेष्ठ्यो वा ब्रह्मोदैवआध्यात्मिकस्तत्तत्स्थानाअन्यास्तद्विभूतयःकर्मपृथक्त्वाद्धिपृथगभिधानस्तुतयोभवन्त्येकैव वा महानात्मा देवता सस्सूर्यइत्याचक्षते । सहि सर्वभूतात्मा । तदुक्तमृषिणा-सूर्यआत्माजगतस्तस्थुषश्चेति । तद्विभूतयोन्यादेवतास्तदप्येतदृचोक्तमिन्द्रंमित्रंवरुणमग्निमाहुरित्यथाभिधानं त्वनुक्रमिष्यामः प्रायेणैन्द्रे मरुतोराज्ञां च दानस्तुतयः ॥ २ ॥ अथ च्छन्दांसि गायत्र्यु-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यतिजगतीशक्वर्यतिशक्वर्यष्ट्यत्यष्टीधृत्यतिधृतयश्चतुर्विंशत्यक्षरादीनि च-
तुरुत्तराणि न्यूनाधिकेनैकेन निचृद्भुरिजौ द्वाभ्यां विराट्स्वराजौ पादपूरणार्थं तु क्षैप्रसंयोगैकाक्ष-
रीभावान् व्यूहेदाद्ये तु सप्तवर्गेपादविशेषात्संज्ञाविशेषास्ताननुक्रामन्तएवोदाहरिष्यामोविराड्रूपा-
विराट्स्थानाश्चबहूनाअपि त्रिष्टुभएवेत्युद्देशस्तत्र दशैकादशद्वादशाक्षराणां वैराजत्रैष्टुभजागताइति
संज्ञाअनादेशेष्टाक्षराः पादाश्चतुष्पदाश्चर्चः ॥ ३ ॥ प्रथमं छन्दस्त्रिपदागायत्री पंचकाश्चत्वारःषट्-
कश्चैकश्चतुर्थश्चतुष्कोवा पदपंक्तिः षट्सप्तैकादशा उष्णिग्गर्भास्त्रयः सप्तकाः पादनिचृन्मध्यमः षट्-
कश्चेदतिनिचृद्दशकश्चेद्यवमध्या यस्यास्तु षट्कसप्तकाष्टकाः सा वर्धमाना विपरीताप्रतिष्ठाद्वौषट्कौ
सप्तकश्च ह्रसीयसी ॥ ४ ॥ द्वितीयमुष्णिक्त्रिपदान्त्योद्वादशक आद्यश्चेत्पुरउष्णिङ्मध्यमश्चेत्ककुप्त्रै-
ष्टुभजागतचतुष्काककुबन्यंकुशिरैकादशिनोः परः षट्कस्तनुशिरामध्ये चेत्पिपीलिकमध्या आद्यः
पंचकस्त्रयोष्टकानुष्टुब्गर्भा चतुःसप्तकोष्णिगेव ॥ ५ ॥ तृतीयमनुष्टुप् पंचपंचकाः षट्कश्चैकोमहा-
पदपंक्तिर्जागतावष्टकश्चकृतिर्मध्ये चेदष्टकः पिपीलिकमध्या नवकयोर्मध्ये जागतः काविराण्नववैरा-
जत्रयोदशैर्नष्टरूपा दशकास्त्रयोविराळेकादशका वा ॥६॥ चतुर्थं बृहती तृतीयोद्वादशकआद्य(श्चाद्य)-

॥ १ ॥ ॥ १ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

श्चेत्पुरस्ताद्बृहती द्वितीयश्चेन्न्यंकुसारिण्युरोबृहती स्कंधोग्रीवी वान्त्यश्चेदुपरिष्टाद्बृहत्याष्टिनोर्मध्ये दश-
कौ विष्टारबृहती त्रिजागतोर्ध्वबृहती त्रयोदशिनोर्मध्येष्टकः पिपीलिकमध्या नवकाष्टयेकादश्याष्टि-
नोविषमपदा चतुर्नवका बृहत्येव ॥ ७ ॥ पंचमं पंक्तिःपंचपदाथ चतुष्पदाविराड्दशकैरयुजौ जा-
गतौ सतोबृहती युजौ चेद्विपरीताऽऽद्यौ चेत्प्रस्तारपंक्तिरन्त्यौ चेदास्तारपंक्तिराद्यान्त्यौ चेत्संस्तार-
पंक्तिर्मध्यमौ चेद्विष्टारपंक्तिः ॥ ८ ॥ षष्ठं त्रिष्टुप् त्रैष्टुभपदा द्वौ तु जागतौ यस्याः सा जागते
जगती त्रैष्टुभे त्रिष्टुप् वैराजौ जागतौ चाभिसारिणी नवकौ वैराजस्त्रैष्टुभश्च द्वौ वा वैराजौ नवक-
स्त्रैष्टुभश्च विराट्स्थानैकादशिनस्त्रयोष्टकश्च विराड्रूपा द्वादशिनस्त्रयोष्टकश्च ज्योतिष्मती यतोष्टक-
स्ततोज्योतिश्चत्वारोष्टकाजागतश्च महाबृहती मध्ये चेद्यवमध्याऽऽद्यौदशकावष्टकास्त्रयः पंक्त्युत्तरा-
विराट्पूर्वा वा ॥ ९ ॥ सप्तमं जगती जागतपदाष्टिनस्त्रयः स्वौ चद्वौमहासतोबृहत्यष्टकौ सप्तकः
षट्कोदशकोनवकश्चषळष्टका वा महापंक्तिः ॥ १० ॥ अथ प्रगाथाबृहतीसतोबृहत्यौ बार्हतः क-
कुप्चेत्पूर्वाकाकुभो महाबृहतीमहासतोबृहत्यौमहाबार्हतोबृहतीविपरीते विपरीतोत्तरोनुष्टुब्गायत्र्यौ
चानुष्टुभावनुष्टुम्मुखास्तृचाइत्युक्तेः ॥ ११ ॥ सूक्तसंख्यानुवर्ततअन्यस्याः सूक्तसंख्यायाऋषिश्चान्य-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्मादृषेरवाविशिष्टस्तु हि ह वै तच्छब्दविशिष्टान्यृषिदैवतच्छंदांसि द्वि त्रि चतुः पंच षट् सूक्तभां-
जि यथासंख्यमनिरुक्ता संख्याविंशतिरनादेशे त्विन्द्रोदेवता त्रिष्टुप्छन्दः प्रगाथावार्हताविंशिका-
द्विपदाविराजस्तदर्धमेकपदाद्विर्द्विपदास्त्वृचः समामनन्त्ययुक्ष्वन्त्या द्विपदैव मण्डलादिष्वाग्नेयमैन्द्रा-
त्रिष्टुबन्तस्य सूक्तस्य शिष्टाजगत्यआदौ गायत्रं प्राग्घिरण्यस्तूपात् ॥ १२ ॥ गोधाघोषाविश्ववारा-
पालोपनिषन्निषत् ॥ ब्रह्मजायाजुहूर्नामागस्त्यस्यस्वसादितिः ॥ इन्द्राणीचेन्द्रमाताचसरमारोमशो-
र्वशी ॥ लोपामुद्राचनद्यश्चयमीनारीचशश्वती ॥ श्रीर्लाक्षासार्पराज्ञीवाक्श्रद्धामेधाचदक्षिणा ॥ रा-
त्रीसूर्याचसावित्रीब्रह्मवादिन्यईरिताः ॥ १३ ॥ पादाअतिजगत्यांतुत्रयोद्वादशकाः परौ ॥ अष्टकौ
शक्करीपादाःसप्तैवाष्टाक्षराः स्मृताः (क्षरइत्यपि) ॥ अतिशाक्करपादौद्वावादितःषोळशाक्षरौ ॥ जाग-
तश्चाष्टकावष्टि पादाःषोळशकास्त्रयः ॥ अष्टकौचात्यष्टिपादौजागतौचाष्टक(का)स्त्रयः ॥ जागतश्चाष्ट-
कश्चाथधृतिपादौतुजागतौ ॥ पादास्त्रयोष्टकाश्चाथषोळशाक्षरएवच ॥ अष्टकश्चाथातिधृतौद्वौपादौ-
जागतौततः (जागतष्षोळशास्त्रयः) ॥ त्रयोष्टकाजागतश्चतथाष्टाक्षरकावपि(रइत्यपि) ॥ परः-
सप्तकपादास्तुप्रसंगात्स्त्रयमीरिताः ॥ १४ ॥ इतिपरिभाषा ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# शाकलऋक्संहिता

ॐ

अग्निनवमधुच्छन्दावैश्वामित्रोवायोवायव्यैन्द्रवायवमैत्रावरुणास्तृचा अश्विनाद्वादशाश्विनैन्द्रवैश्व-
देवसारस्वतास्तृचाः सप्तैताः प्रउगदेवताः सुरूपकृत्नुंद्वशैन्द्रमातुयुञ्जन्त्यादद्देसेताःषण्मारुत्योवीळुचि-
दिन्द्रेणेत्यैन्द्र्यौचेन्द्रमिदेन्द्रसानसिमिन्द्रेहिगायन्तिद्वादशानुष्टुभं त्विन्द्रमष्टौजेतामाधुच्छन्दसोग्निद्वा-
दशमेधातिथिः काण्वआग्नेयमग्निनेतिपादोद्यग्निदैवतोनिर्मथ्याहवनीयाभ्यांसुसमिद्धइतीध्मः समि-
द्धोवाग्निस्तनूनपान्नराशंस इळोबर्हिर्देवीर्द्वारउषासानक्तादैव्यौहोतारौप्रचेतसौतिस्रोदेव्यः सरस्वती
ळाभारत्यस्त्वष्टावनस्पतिः स्वाहाकृतयइतिप्रत्यृचंदेवताएतदाप्रीसूक्तमेतेनान्यान्युक्तदेवतान्येकादश-
कानित्वनाराशंसान्याप्रशब्दोक्तान्य ( क्तानित्व ) तनूनपान्त्यैभिर्वैश्वदेवमिन्द्रसोमपृतव्यंतत्रैन्द्रीमारु-
तीत्वाष्ट्र्याग्नेय्यैन्द्रीमैत्रावरुणीचतस्रोद्रविणोदसआश्विन्याग्नेयीत्यृतुदेवताः सर्वत्रात्वानवैन्द्रावरुण-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ऋ. सं.

अ.१अ.१

योरैन्द्रावरुणंयुवाकुपादनिचृतौसोमानमितिपञ्चब्राह्मणस्पत्याश्चतुर्थ्यामिन्द्रश्चसोमश्चपञ्चम्यांदक्षिणा-
चान्याःसादसस्पत्यानाराशंसीवान्त्याप्रतित्यमाग्निमारुतम् ॥ १ ॥

॥ ३ ॥

अग्निं नव वैश्वामित्रोमधुच्छन्दाअग्निर्गायत्री ।

१ ॐ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजम् । होतारंरत्नधातमम् १
अग्निःपूर्वेभिर्ऋषिभिरीड्योनूतनैरुत । सदेवाँएहवक्षति २ अग्निनारयिमश्नव-
त्पोषमेवदिवेदिवे । यशसंवीरवत्तमम् ३ अग्नेयंयज्ञमध्वरंविश्वतःपरिभूरसि ।
सइद्देवेषुगच्छति ४ अग्निर्होताकविक्रतुःसत्यश्चित्रश्रवस्तमः । देवोदेवेभिरा-
गमत् ५ ॥ १ ॥ यदङ्गदाशुषेत्वमग्नेभद्रंकरिष्यसि । तवेत्तत्सत्यमङ्गिरः ६
उपत्वाग्नेदिवेदिवेदोषावस्तर्धियावयम् । नमोभरन्तएमसि ७ राजन्तमध्वरा-
णांगोपामृतस्यदीदिविम् । वर्धमानंस्वेदमे ८ सनःपितेवसूनवेग्नेसूपायनोभव ।
सचस्वानःस्वस्तये ९ ॥ २ ॥

॥ ३ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वायोनव मधुच्छन्दाः त्रयाणांतृचां वायुरिन्द्रवायूमित्रावरुणौ गायत्री ।

२ वायवायाहिदर्शतेमेसोमाअरंकृताः । तेषांपाहिश्रुधीहवंम् १ वायउक्थेभिर्जरन्तेत्वामच्छाजरितारः । सुतसोमाअहर्विदः २ वायोतवप्रपृञ्चतीधेनाजिगातिदाशुषे । उरूचीसोमपीतये ३ इन्द्रवायूइमेसुताउपप्रयोभिरागतम् । इन्दवोवामुशन्तिहि ४ वायविन्द्रश्चचेतथःसुतानांवाजिनीवसू । तावायातमुपद्रवत् ५ ॥ ३ ॥ वायविन्द्रश्चसुन्वतआयातमुपनिष्कृतम् । मक्ष्वि १त्थाधियानरा ६ मित्रंहुवेपूतदक्षंवरुणंचरिशादसम् । धियंघृताचींसाधन्ता ७ ऋतेनमित्रावरुणावृतावृधावृतस्पृशा । क्रतुंबृहन्तमाशाथे ८ कवीनोमित्रावरुणातुविजाताउरुक्षया । दक्षंदधातेअपसम् ९ ॥ ४ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अश्विना द्वादश मधुच्छन्दाश्चतुर्णांतृचां अश्विनौइन्द्रःविश्वेदेवाःसरस्वती गायत्री ।

॥ ४ ॥

३ अश्विनायज्वंरीरिषोद्रवंत्पाणीशुभंस्पती । पुरुंभुजाचनस्यतंम् १ अश्विनापुरुंदंससानराशवींरयाधिया । धिष्ण्यावनंतंगिरंः २ दस्रांयुवाकंवःसुतानासंत्यावृक्तबंर्हिषः । आयांतंरुद्रवर्तनी ३ इन्द्रायांहिचित्रभानोसुताइमेत्वायवंः । अण्वींभिस्तनांपूतासंः ४ इन्द्रायांहिधियेषितोविप्रंजूतःसुतावंतः । उपब्रह्मांणिवाघतंः ५ इन्द्रायांह्रितूतुंजानउपब्रह्मांणिहरिवः । सुतेदंधिष्वनश्चनंः ६ ॥ ५ ॥ ओमांसश्चर्षणीधृतोविश्वेदेवासआगंत । दाश्वांसोंदाशुषंःसुतम् ७ विश्वेदेवासोंअप्तुरंःसुतमागन्ततूर्णंयः । उस्राइंवस्वसंराणि ८ विश्वेदेवासोंअस्रिधएहिंमायासोअद्रुहंः । मेधंजुषन्तवह्नंयः ९ पावकानःसरंस्वतीवाजेंभिर्वाजिनींवती । यज्ञंवंष्टुधियावंसुः १० चोदयित्रीसूनृतांनांचेतंन्तीसुमतीनाम् । यज्ञंदंधेसरंस्व-

॥ ४ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ती ११ महोअर्णःसरस्वतीप्रचैतयतिकेतुना । धियोविश्वाविराजति १२ ॥ ६ ॥

॥ इति शाकलऋक्संहितायां प्रथमेमण्डले प्रथमोनुवाकः ॥ १ ॥

सुरूपकृत्नुं दश मधुच्छन्दाः इन्द्रोगायत्री ।

४ सुरूपकृत्नुमूतयेसुदुघामिवगोदुहे । जुहूमसिद्यविद्यवि १ उपनःसवना-गहिसोमस्यसोमपाःपिब । गोदाइद्रेवतोमदः २ अथातेअन्तमानांविद्यामसुम-तीनाम् । मानोअतिख्यआगहि ३ परेहिविग्रमस्तृतमिन्द्रंपृच्छाविपश्चितम् । यस्तेसखिभ्यआवरम् ४ उतब्रुवन्तुनोनिदोनिरन्यतश्चिदारत । दधानाइन्द्रइ-द्दुवः ५ ॥ ७ ॥ उतनःसुभगाँअरिर्वोचेयुर्दस्मकृष्टयः । स्यामेदिन्द्रस्यशर्मणि ६ एमाशुमाशवेभरयज्ञश्रियंनृमादनम् । पतयन्मन्दयत्सखम् ७ अस्यपीत्वा-शतक्रतोघनोवृत्राणामभवः । प्रावोवाजेषुवाजिनम् ८ तंत्वावाजेषुवाजिनंवा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अश्विना द्वादश मधुच्छन्दाश्चतुर्णांतृचां अश्विनौइन्द्रःविश्वेदेवाःसरस्वती गायत्री ।

॥ ४ ॥

३ अश्विनायज्वरीरिषोद्रवत्पाणीशुभस्पती । पुरुभुजाचनस्यतम् १ अश्वि-
नापुरुदंससानराशवीरयाधिया । धिष्ण्यावनतंगिरः २ दस्रायुवाकवःसुतानास-
त्यावृक्तबर्हिषः । आयातंरुद्रवर्तनी ३ इन्द्रायाहिचित्रभानोसुताइमेत्वायवः ।
अण्वीभिस्तनापूतासः ४ इन्द्रायाहिधियेषितोविप्रजूतःसुतावतः । उपब्रह्माणि-
वाघतः ५ इन्द्रायाहितूतुजानउपब्रह्माणिहरिवः । सुतेदधिष्वनश्चनः ६ ॥ ५ ॥
ओमासश्चर्षणीधृतोविश्वेदेवासआगत । दाश्वांसोदाशुषःसुतम् ७ विश्वेदेवासो-
अप्तुरःसुतमागन्ततूर्णयः । उस्राइवस्वसराणि ८ विश्वेदेवासोअस्रिधएहिमाया-
सोअद्रुहः । मेधंजुषन्तवह्नयः ९ पावकानःसरस्वतीवाजेभिर्वाजिनीवती ।
यज्ञंवष्टुधियावसुः १० चोदयित्रीसूनृतानांचेतन्तीसुमतीनाम् । यज्ञंदधेसरस्व-

॥ ४ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ती ११ महोअर्णःसरस्वतीप्रचैतयतिकेतुना । धियोविश्वाविराजति १२ ॥ ६ ॥
॥ इति शाकलऋक्संहितायां प्रथमेमण्डले प्रथमोनुवाकः ॥ १ ॥

सुरूपकृत्नुं दश मधुच्छन्दाः इन्द्रोगायत्री ।

४ सुरूपकृत्नुमूतयेसुदुघांमिवगोदुहे । जुहूमसिद्यविद्यवि १ उपनःसवनागहिसोमस्यसोमपाःपिब । गोदाइद्रेवतोमदः २ अथातेअन्तमानांविद्यामसुमतीनाम् । मानोअतिख्यआगहि ३ परेहिविग्रमस्तृतमिन्द्रंपृच्छाविपश्चितम् । यस्तेसखिभ्यआवरम् ४ उतब्रुवन्तुनोनिदोनिरन्यतश्चिदारत । दधानाइन्द्रइद्दुवः ५ ॥ ७ ॥ उतनःसुभगाँअरिर्वोचेयुर्दस्मकृष्टयः । स्यामेदिन्द्रस्यशर्मणि ६ एमाशुमाशवेभरयज्ञश्रियंनृमादनम् । पतयन्मन्दयत्सखम् ७ अस्यपीत्वाशतक्रतोघनोवृत्राणामभवः । प्रावोवाजेषुवाजिनम् ८ तंत्वावाजेषुवाजिनंवा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ज़याम॑ःशतक्रतो । धना॑नामिन्द्रसा॒तये॑ १ योरा॒यो॒३॒॑वनि॑र्म॒हान्त्सु॑पा॒र ःसु॑न्व॒तः सखा॑ । तस्मा॒इन्द्रा॑यगायत १० ॥ ८ ॥





आतु दश मधुच्छन्दाइन्द्रोगायत्री ।

५ आत्वेता॒निषी॑द॒तेन्द्र॑म॒भिप्रगा॑यत । सखा॑य॒ःस्तोम॑वाहसः १ पु॒रू॒तम॑पु॒रू॒णामीशा॑न॒ंवार्या॑णाम् । इन्द्रं॒सोमे॒सचा॑सु॒ते २ सघा॑नो॒योग॒आभु॑व॒त्सरा॒येसपुर॑न्ध्याम् । गम॒द्वाजे॑भि॒रासन॑ः ३ यस्य॑सं॒स्थेनवृ॒ण्वते॒हरी॑स॒मत्सु॒शत्र॑वः । तस्मा॒इन्द्रा॑यगायत ४ सु॒त॒पाव्ने॑सु॒ताइ॒मेशु॒च॑योयन्तिवी॒तये॑ । सोमा॑सो॒दध्या॑शिरः ५ ॥ ९ ॥ त्वंसु॒तस्य॑पी॒तये॑स॒द्योवृ॒द्धोअ॑जायथाः । इन्द्र॒ज्यैष्ठ्या॑यसुक्रतो ६ आत्वा॑विशन्त्वा॒शव॒ःसोमा॑सइन्द्रगिर्वणः । शंते॑सन्तु॒प्रचे॑तसे ७ त्वांस्तोमा॑अवीवृ॒धन्त्वामु॒क्थाश॑तक्रतो । त्वांव॑र्धन्तु॒नो॒गिर॑ः ८ अक्षि॑तोतिःसनेदि॒मंवाज॒मिन्द्र॑ः



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सहस्त्रिणंम् । यस्मिन्विश्वानिपौंस्या १ मानोमर्ताअभिद्रुंहन्तनूनामिन्द्रगिर्व-
णः । ईशानोयवयावधम् १० ॥ १० ॥

युञ्जन्ति दश मधुच्छन्दाःआद्यानांतिसृणामिन्द्रःततःषण्णांमरुतःत्री-
ळुचिदिन्द्रेणेतिद्वयोरिन्द्रश्च दशम्याइद्रः गायत्री ।

६ युञ्जन्तिंब्रध्ममंरुषंचरन्तंपरिंतस्थुर्षः । रोचन्तेरोचनादिवि १ युञ्जन्त्यं-
स्यकाम्याहरीविपक्षसारथैं । शोणाधृष्णूनृवाहसा २ केतुंकृण्वन्नंकेतवेपेशोंम-
र्याअपेशसें । समुषद्भिंरजायथाः ३ आदहंस्वधामनुपुनर्गर्भत्वमेरिरे । दधाना-
नामंयज्ञियंम् ४ वीळुचिंदारुजत्नुभिर्गुहाचिदिन्द्रवह्निंभिः । अविन्दउस्त्रियाअ-
नुं ५ ॥ ११ ॥ देवयन्तोयथामतिमच्छाविदद्वसुंगिरः । महामनूषतश्रुतम् ६ इन्द्रे-
णसंहिदृक्षंसेसंजग्मानोअबिभ्युषा । मन्दूसंमानवर्चसा ७ अनवद्यैरभिद्युभि-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मखः सहस्वदर्चति । गणैरिन्द्रस्य काम्यैः ८ अतः परिज्मन्नागहि दिवो वा रोचनादधि । समस्मिन्नृञ्जते गिरः ९ इतो वा सातिमीमहे दिवो वा पार्थिवादधि । इन्द्रं महो वा रजसः १० ॥ १२ ॥

इन्द्रमिद्दश मधुच्छन्दा इन्द्रो गायत्री ।

७ इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत १ इन्द्र इद्धर्योः सचा संमिश्ल आवचोयुजा । इन्द्रो वज्री हिरण्ययः २ इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयद्दिवि । वि गोभिरद्रिमैरयत् ३ इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च । उग्र उग्राभिरूतिभिः ४ इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे । युजं वृत्रेषु वज्रिणम् ५ ॥ १३ ॥ स नो वृषन्नमुं चरुं सत्रादावन्नपावृधि । अस्मभ्यमप्रतिष्कुतः ६ तुञ्जेतुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः । न विन्धे अस्य सुष्टुतिम् ७ वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

जसा । ईशानोअप्रतिष्कुतः ८ यएकश्चर्षणीनांवसूनामिरज्यति । इन्द्रःपञ्चक्षि-
तीनाम् ९ इन्द्रंवोविश्वतस्परिहवामहेजनेभ्यः । अस्माकमस्तुकेवलः १०
॥ १४ ॥ इति प्रथमे द्वितीयोनुवाकः ॥ २ ॥

एन्द्र दश मधुच्छन्दाइन्द्रोगायत्री ।

८ एन्द्रसानसिंरयिंसजित्वानंसदासहम् । वर्षिष्ठमूतयेभर १ नियेनमुष्टि-
हत्ययानिवृत्रारुणधामहै । त्वोतासोन्यर्वता २ इन्द्रत्वोतासआवयंवज्रंघनाद-
दीमहि । जयेमसंयुधिस्पृधः ३ वयंशूरेभिरस्तृभिरिन्द्रत्वयायुजावयम् । सास-
ह्यामपृतन्यतः ४ महाँइन्द्रःपरश्चनुमहित्वमस्तुवज्रिणे । द्यौर्नप्रथिनाशवः ५
॥ १५ ॥ समोहेवायआशतनरस्तोकस्यसनितौ । विप्रासोवाधियायवः ६ यः
कुक्षिःसोमपातमःसमुद्रइवपिन्वते । उर्वीरापोनकाकुदः ७ एवाह्यस्यसूनृता-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विरप्शीगोमतीमही । पक्वाशाखानदाशुषे ८ एवाहितेविभूतयऊतयइन्द्रमावते । सद्यश्चित्सन्तिदाशुषे ९ एवाह्यस्यकाम्यास्तोमउक्थंचशंस्या । इन्द्रायसोमपीतये १० ॥ १६ ॥



इन्द्रेहि दश मधुच्छन्दाइन्द्रोगायत्री ।

१ इन्द्रेहिमत्स्यन्धसोविश्वेभिःसोमपर्वभिः । महाँअभिष्टिरोजसा १ एमेनंसृजतासुतेमन्दिमिन्द्रायमन्दिने । चक्रिंविश्वानिचक्रये २ मत्स्वासुशिप्रमन्दिभिःस्तोमेभिर्विश्वचर्षणे । सचैषुसवनेष्वा ३ असृग्रमिन्द्रतेगिरःप्रतित्वामुदहासत । अजोषावृषभंपतिम् ४ संचोदयचित्रमर्वाग्राधइन्द्रवरेण्यम् । असदित्तेविभुप्रभु ५ ॥ १७ ॥ अस्मान्त्सुतत्रचोदयेन्द्ररायेरभस्वतः । तुविद्युम्नयशस्वतः ६ संगोमदिन्द्रवाजवदस्मेपृथुश्रवोबृहत् । विश्वायुर्धेह्यक्षितम् ७ अ-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्मेधेहिश्रवोबृहद्द्युम्नंसंहस्रसातंमम् । इन्द्रतारथिनीरिषः ८ वसोरिन्द्रंवसुपतिं-गीर्भिर्गृणन्तंऋग्मियंम् । होमगन्तारमूतये ९ सुतेसुतेन्योकसेबृहद्बृहतएदरिः । इन्द्रायशूषमर्चति १० ॥ १८ ॥

गायन्ति द्वादश मधुच्छन्दाइन्द्रोनुष्टुप् ।

१० गायन्तित्वागायत्रिणोचन्त्यर्कमर्किणः । ब्रह्माणस्त्वाशतक्रतउद्वंश-मिवयेमिरे १ यत्सानोःसानुमारुहद्भूर्यस्पष्टकर्त्वम् । तदिन्द्रोअर्थंचेततियूथेनवृ-ष्णिरेजति २ युक्ष्वाहिकेशिनाहरीवृषणाकक्ष्यप्रा । अथानइन्द्रसोमपागिरा-मुपश्रुतिंचर ३ एहिस्तोमाँअभिस्वराभिगृणीह्यारुव । ब्रह्मचनोवसोसचेन्द्र-यज्ञंचवर्धय ४ उक्थमिन्द्रायशंस्यंवर्धनंपुरुनिष्षिधे । शक्रोयथासुतेषुणोरार-णत्सख्येषुच ५ तमित्सखित्वईमहेतंरायेतंसुवीर्ये । सशक्रउतनःशकदिन्द्रोवसु-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

 

दयमानः ६ ॥ ११ ॥ सुविवृतंसुनिरजमिन्द्रत्वादातमिद्यशः । गवामपव्रजं-वृधिकृणुष्वराधोअद्रिवः ७ नहित्वारोदसीउभेऋघायमाणमिन्वतः । जेषःस्वर्वतीरपःसंगाअस्मभ्यंधूनुहि ८ आश्रुत्कर्णश्रुधीहवंनूचिद्दधिष्वमेगिरः । इन्द्रस्तोममिमंममकृष्वायुजश्चिदन्तरम् ९ विद्माहित्वावृषन्तमंवाजेषुहवनश्रुतम् । वृषन्तमस्यहूमहऊतिंसहस्रसातमाम् १० आतूनइन्द्रकौशिकमन्दसानःसुतंपिब । नव्यमायुःप्रसूतिरकृधीसहस्रसामृषिम् ११ परित्वागिर्वणोगिरइमाभवन्तुविश्वतः । वृद्धायुमनुवृद्धयोजुष्टाभवन्तुजुष्टयः १२ ॥ २० ॥



इन्द्रंविश्वाष्टौ मधुच्छन्दसोजेता इन्द्रोनुष्टुप् ।

११ इन्द्रंविश्वाअवीवृधन्त्समुद्रव्यचसंगिरः। रथीतमंरथीनांवाजानांसत्पतिंपतिम् १ सख्येतइन्द्रवाजिनोमाभेमशवसस्पते । त्वामभिप्रणोनुमोजेतारम-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

परांजितम् २ पूर्वीरिन्द्रस्यरातयोनविदस्यन्त्यूतयः । यदीवाजस्यगोमतःस्तो-
तृभ्योमंहतेमघम् ३ पुरांभिन्दुर्युवांकविरमितौजाअजायत । इन्द्रोविश्वस्यक-
र्मणोधर्तावज्रीपुरुष्टुतः ४ त्वंवलस्यगोमतोपावरद्रिवोबिलम् । त्वांदेवाअबि-
भ्युषस्तुज्यमानासआविषुः ५ तवाहंशूररातिभिःप्रत्यायंसिन्धुमावदन् । उपा-
तिष्ठन्तगिर्वणोविदुष्टेतस्यकारवः ६ मायाभिरिन्द्रमायिनंत्वंशुष्णमवातिरः ।
विदुष्टेतस्यमेधिरास्तेषांश्रवांस्युत्तिर ७ इन्द्रमीशानमोजसाभिस्तोमाअनूषत ।
सहस्रंयस्यरातयउतवासन्तिभूयसीः ८ ॥ २१ ॥ इति प्रथमे तृतीयोनुवाकः ॥ ३ ॥

अग्निं द्वादश मेधातिथिः काण्वोग्निः अग्निनेतिपादोनिर्मथ्याहवनीयरूपद्यग्निदैवतः गायत्री ।

१२ अग्निंदूतंवृणीमहेहोतारंविश्ववेदसम् । अस्ययज्ञस्यसुक्रतुम् १ अग्नि-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मग्निंहवींमभिःसदाहवन्तविश्पतिम् । हव्यवाहंपुरुप्रियम् २ अग्नेदेवाँइहावहज-
ज्ञानोवृक्तबर्हिषे । असिहोतानईड्यः ३ ताँउशतोविबोधययदग्नेयासिदूत्यम् ।
॥ ९ ॥ देवैरासत्सिबर्हिषि ४ घृताहवनदीदिवःप्रतिष्मरिषतोदह । अग्नेत्वंरक्षस्विनः
५ अग्निनाग्निःसमिध्यतेकविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्यः ६ ॥ २२ ॥
कविमग्निमुपस्तुहिसत्यधर्माणमध्वरे । देवममीवचातनम् ७ यस्त्वामग्नेहवि-
ष्पतिर्दूतंदेवसपर्यति । तस्यस्मप्राविताभव ८ योअग्निंदेववीतयेहविष्माँआवि-
वासति । तस्मैपावकमृळय ९ सनःपावकदीदिवोग्नेदेवाँइहावह । उपयज्ञंह-
विश्चनः १० सनस्तवानआभरगायत्रेणनवीयसा । रयिंवीरवतीमिषम् ११
अग्नेशुक्रेणशोचिषाविश्वाभिर्देवहूतिभिः । इमंस्तोमंजुषस्वनः १२ ॥ २३ ॥ ॥ ९ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सुसमिद्धोद्वादश मेधातिथिः इध्मःसमिद्धोवाग्निस्तनूनपान्नराशंस इळो बर्हिर्देवीर्द्वार
उषासानक्ता दैव्यौहोतारौप्रचेतसौ तिस्रोदेव्यःसरस्वतीळाभारत्यस्त्वष्टा
वनस्पतिःस्वाहाकृतय इतिप्रत्यृचंदैवतमाप्रगायत्रम् ।

१२ सुसमिद्धोनआवहदेवाँअग्नेहविष्मते । होतःपावकयक्षिच १ मधुमंतं-
तनूनपाद्यज्ञंदेवेषुनःकवे । अद्याकृणुहिवीतये २ नराशंसमिहप्रियमस्मिन्यज्ञ-
उपह्वये । मधुजिह्वंहविष्कृतम् ३ अग्नेसुखतमेरथेदेवाँईळितआवह । असि-
होतामनुर्हितः ४ स्तृणीतबर्हिरानुषग्घृतपृष्ठंमनीषिणः । यत्रामृतस्यचक्षणम्
५ विश्रयन्तामृतावृधोद्वारोदेवीरसश्चतः । अद्यानूनंचयष्टवे ६ ॥ २४ ॥ नक्तो-
षासासुपेशसास्मिन्यज्ञउपह्वये । इदंनोबर्हिरासदे ७ तासुजिह्वाउपह्वयेहो-
तारादैव्याकवी । यज्ञंनोयक्षतामिमम् ८ इळासरस्वतीमहीतिस्रोदेवीर्मयोभुवः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ऋ. सं. मग्निंहवीमभिःसदाहवन्तविश्पतिम् । हव्यवाहंपुरुप्रियम् २ अग्नेदेवाँइहावहज- ज्ञानोवृक्तबर्हिषे । असिहोतानईड्यः ३ ताँउशतोविबोधययदंग्नेयासिदूत्यम् । देवैरासत्सिबर्हिषि ४ घृताहवनदीदिवःप्रतिष्मरिषतोदह । अग्नेत्वंरक्षस्विनः ५ अग्निनाग्निःसमिध्यतेकविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्यः ६ ॥ २२ ॥ कविमग्निमुपस्तुहिसत्यधर्माणमध्वरे । देवममीवचातनम् ७ यस्त्वामग्नेहविष्पतिर्दूतंदेवसपर्यति । तस्यस्मप्राविताभव ८ योअग्निंदेववीतयेहविष्माँआविवासति । तस्मैपावकमृळय ९ सनःपावकदीदिवोग्नेदेवाँइहावह । उपयज्ञंहविश्चनः १० सनस्तवानआभरगायत्रेणनवीयसा । रयिंवीरवतीमिषम् ११ अग्नेशुक्रेणशोचिषाविश्वाभिर्देवहूतिभिः । इमंस्तोमंजुषस्वनः १२ ॥ २३ ॥ अ.१अ.१

॥ ९ ॥ ॥ ९ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सुसमिद्धोद्वादश मेधातिथिः इध्मःसमिद्धोवाग्निस्तनूनपान्नराशंस इळो बर्हिर्देवीर्द्वार
उषासानक्ता दैव्यौहोतारौप्रचेतसौ तिस्रोदेव्यःसरस्वतीळाभारत्यस्त्वष्टा
वनस्पतिःस्वाहाकृतय इतिप्रत्यृचंदैवतमाप्रगायत्रम् ।

१२ सुसंमिद्धोनआवहदेवाँअग्नेहविष्मते । होतःपावकयक्षिच १ मधुमंतं-
तनूनपाद्यज्ञंदेवेषुनःकवे । अद्याकृणुहिवीतये २ नराशंसमिहप्रियमस्मिन्यज्ञ-
उपह्वये । मधुजिह्वंहविष्कृतम् ३ अग्नेसुखतमेरथेदेवाँईळितआवह । असि-
होतामनुर्हितः ४ स्तृणीतबर्हिरानुषग्घृतपृष्ठंमनीषिणः । यत्रामृतस्यचक्षणम्
५ विश्रयन्तामृतावृधोद्वारोदेवीरसश्चतः । अद्यानूनंचयष्टवे ६ ॥ २४ ॥ नक्तो-
षासासुपेशसास्मिन्यज्ञउपह्वये । इदंनोबर्हिरासदे ७ तासुजिह्वाउपह्वयेहो-
तारादैव्याकवी । यज्ञंनोयक्षतामिमम् ८ इळासरस्वतीमहीतिस्रोदेवीर्मयोभुवः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

बर्हिःसींदन्त्वस्रिधः १ इहत्वष्टारमग्रियंविश्वरूपमुपंह्वये । अस्माकंमस्तुकेवं-लः १० अवंसृजावनस्पतेदेवंदेवेभ्योंहविः । प्रदातुरंस्तुचेतंनम् ११ स्वाहांय्-ज्ञंकृणोतनेन्द्रांययज्वंनोगृहे । तत्रंदेवाँउपंह्वये १२ ॥ २५ ॥

ऐभिर्द्वादश मेधातिथिर्विश्वेदेवागायत्री ।

१४ ऐभिंरग्नेदुवोगिरोविश्वेंभिःसोमंपीतये । देवेभिर्याहियक्षिंच १ आत्वा-कण्वांअहूषतगृणन्तिंविप्रतेधियंः । देवेभिंरग्नआगंहि २ इन्द्रवायूबृहस्पतिं-मित्राग्निंपूषणंभगंम् । आदित्यान्मारुतंगणम् ३ प्रवोंभ्रियन्तइन्दंवोमत्सरामा-दयिष्णवंः । द्रप्सामध्वंश्चमूषदंः ४ ईळंतेत्वामंवस्यवःकण्वांसोवृक्तबंर्हिषः । ह-विष्मंन्तोअरङ्कृतंः ५ घृतपृष्ठामनोयुजोयेत्वावहंन्तिवह्नंयः । आदेवान्त्सोमं-पीतये ६ ॥ २६ ॥ तान्यजंत्राँऋतावृधोग्नेपत्नींवतस्कृधि । मध्वंःसुजिह्व-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पायय ७ येयजंत्रायईड्यास्तेतेंपिबन्तुजिह्वयां । मधोरग्नेवषंट्कृति ८ आ-
कींसूर्यस्यरोचनाद्विश्वांन्देवाँउंषर्बुधः । विप्रोहोतेहवंक्षति ९ विश्वेंभिःसोम्यंम-
ध्वग्नइन्द्रेणवायुनां । पिबांमित्रस्यधामंभिः १० त्वंहोतामनुंर्हितोग्नेंयज्ञेषुं-
सीदसि । सेमंनोअध्वरंयंज ११ युक्ष्वाह्यरुषीरथेंहरितोंदेवरोहितंः । ताभिर्दे
वाँइहावंह १२ ॥ २७ ॥

इन्द्रसोमंद्वादश मेधातिथिःआद्यानांषण्णामिन्द्रोमरुतस्त्वष्टाग्निरिन्द्रोमित्रावरुणौदेवता त-
तश्चतुर्णांद्रविणोदाःएकादश्याअश्विनौद्वादश्याअग्निः गायत्री ( ऋतव्यंसूक्तम् ) ।

१५ इंद्रसोमंपिबंऋतुनात्वांविशन्त्विन्दंवः । मत्सरासस्तदोंकसः १ मरुंतः
पिबंतऋतुनांपोत्राद्यज्ञंपुंनीतन । यूयंहिष्ठासुंदानवः २ अभियज्ञंगृंणीहिनोग्ना-
वोनेष्टःपिबंऋतुनां । त्वंहिरंत्नधाअसिं ३ अग्नेंदेवाँइहावंहसादयायोनिंषुत्रिषु ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

परिभूषपिबंऋतुना ४ ब्राह्मणादिन्द्रराधसःपिबासोममृतूँरनु। तवेद्धिसख्यमस्तृतम् ५ युवंदक्षंधृतव्रतमित्रावरुणदूळभम्। ऋतुनायज्ञमाशाथे ६ ॥२८॥ द्रविणोदाद्रविणसोग्रावहस्तासोअध्वरे। यज्ञेषुदेवमीळते ७ द्रविणोदाददातुनोवसूनियानिशृण्विरे। देवेषुतावनामहे ८ द्रविणोदाःपिपीषतिजुहोतप्रचतिष्ठत। नेष्ट्राहृतुभिरिष्यत ९ यत्त्वातुरीयमृतुभिर्द्रविणोदोयजामहे। अधस्मानोददिर्भव १० अश्विनापिबतंमधुदीद्यग्नीशुचिव्रता। ऋतुनायज्ञवाहसा ११ गार्हपत्येनसन्त्यऋतुनायज्ञनीरसि। देवान्देवयतेयज १२ ॥ २९ ॥

आत्वा नव मेधातिथिरिन्द्रोगायत्री।

१६ आत्वावहन्तुहरयोवृषणंसोमपीतये। इन्द्रंत्वासूरचक्षसः १ इमाधानाघृतस्नुवोहरीइहोपवक्षतः। इन्द्रंसुखतमेरथे २ इन्द्रंप्रातर्हवामहइन्द्रंप्रयत्यध्वरे।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इन्द्रंसोमस्यपीतये३ उपनःसुतमागहिहरिभिरिन्द्रकेशिभिः। सुतेहित्वाहवामहे ४ सेमंनःस्तोममागह्युपेदंसवनंसुतम्। गौरोनतृषितःपिब ५ ॥ ३० ॥ इमेसोमासइन्दवःसुतासोअधिबर्हिषि। ताँइन्द्रसहसेपिब ६ अयंतेस्तोमोअग्रियोहृदिस्पृगस्तुशंतमः। अथासोमंसुतंपिब ७ विश्वमित्सवनंसुतमिन्द्रोमदायगच्छति। वृत्रहासोमपीतये ८ सेमंनःकाममापृणगोभिरश्वैःशतक्रतो। स्तवामत्वास्वाध्यः ९ ॥ ३१ ॥

इन्द्रावरुणयोर्नव मेधातिथिरिन्द्रावरुणौ गायत्री युवाकुरितिद्वेपादनिचृतौ।

१७ इन्द्रावरुणयोरहंसम्राजोरवआवृणे। तानोमृळातईदृशे १ गन्ताराहिस्थोवसेहवंविप्रस्यमावतः। धर्तारांचर्षणीनाम् २ अनुकामंतर्पयेथामिन्द्रावरुणरायआ। तावांनेदिष्ठमीमहे ३ युवाकुहिशचीनांयुवाकुंसुमतीनाम्। भूयामवा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

जदाव्नाम् ४ इन्द्रः सहस्रदाव्नांवरुणः शंस्यानाम्। क्रतुर्भवत्युक्थ्यः ५ ॥ ३२॥ तयोरि-
दवसावयंसनेमनिचंधीमहि। स्यादुतप्ररेचनम् ६ इन्द्रावरुणवामहंहुवेचित्रायराधसे। अस्मान्सुजिग्युषस्कृतम् ७ इन्द्रावरुणनूनुवांसिषासन्तीषुधीष्वा। अस्मभ्यंशर्मयच्छतम् ८ प्रवामश्नोतुसुष्टुतिरिन्द्रावरुणयांहुवे। यामृधाथेसधस्तुतिम् ९ ॥ ३३ ॥ इति चतुर्थोऽनुवाकः ॥ ४ ॥

सोमानं नव मेधातिथिःआद्यानांतिसृणांब्रह्मणस्पतिश्चतुर्थ्याब्रह्मणस्पतिरिन्द्रःसोमश्च पंचम्याब्रह्मणस्पत्यादितिस्रोदक्षिणाच ततस्तिसृणांसदसस्पतिरन्त्यायाःसदसस्पतिर्नराशंसोवा गायत्री।

१८ सोमानंस्वरणंकृणुहिब्रह्मणस्पते। कक्षीवन्तंयऔशिजः १ योरेवान्योअमीवहावसुवित्पुष्टिवर्धनः। सनःसिषक्तुयस्तुरः २ मानःशंसोअररुषोधूर्तिःप्रणङ्मर्त्यस्य। रक्षाणोब्रह्मणस्पते ३ सघावीरोनरिष्यतियमिन्द्रोब्रह्मणस्पतिः।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सोमोहिनोतिमर्त्यम् ४ त्वंतंब्रह्मणस्पतेसोमइन्द्रश्चमर्त्यम् । दक्षिणापात्वंहसः ५ ॥ ३४ ॥ सदसस्पतिमद्भुतंप्रियमिन्द्रस्यकाम्यम् । सनिंमेधामयासिषम् ६ यस्मादृतेनसिध्यतियज्ञोविपश्चितश्चन । सधीनांयोगमिन्वति ७ आदृध्नोतिहविष्कृतिंप्राञ्चंकृणोत्यध्वरम् । होत्रादेवेषुगच्छति ८ नराशंसंसुधृष्टममपश्यंसप्रथस्तमम् । दिवोनसद्ममखसम् ९ ॥ ३५ ॥

प्रतित्यं नव मेधातिथिराग्निमारुतं गायत्रम् ।

११ प्रतित्यंचारुमध्वरंगोपीथायप्रहूयसे । मरुद्भिरग्नआगहि १ नहिदेवोनमर्त्योमहस्तवक्रतुंपरः । मरुद्भिरग्नआगहि २ येमहोरजसोविदुर्विश्वेदेवासोअद्रुहः । मरुद्भिरग्नआगहि ३ यउग्राअर्कमानृचुरनाधृष्टासओजसा । मरुद्भिरग्नआगहि ४ येशुभ्राघोरवर्पसःसुक्षत्रासोरिशादसः । मरुद्भिरग्नआगहि ५

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

॥ ३६ ॥ येनाकुस्याधिंरोचुनेदिविदेवासुआसंते । मुरुद्भिंरग्नुआगंहि ६ यईङ्खयंन्तिपर्वंतान्तिुरःसंमुद्रमंर्णुवम् । मुरुद्भिंरग्नुआगंहि ७ आयेतुन्वन्तिंरुश्मिभिंस्तिुरःसंमुद्रमोजंसा । मुरुद्भिंरग्नुआगंहि ८ अुभित्वांपूर्वपींतयेसृजामिंसोुम्यंमधुं । मुरुद्भिंरग्नुआगंहि ९ ॥ ३७॥ इति शाकलसं० प्रथमाष्टके प्रथमोध्यायः ॥१॥

अयमष्टावार्भवमिहपळैन्द्राग्नंप्रातर्युजासैकाचतस्रआश्विन्यस्तथासाविञ्यआग्नेय्यौद्वेदेवीनामेकैकेन्द्राणीवरुणान्यग्नायीनांद्यावापृथिव्येपार्थिवीषड्वैष्णव्योतोदेवादैवीवातीत्राश्चतुर्विंशतिर्वायव्यैकैन्द्रवायव्यौमैत्रावरुणमरुत्वतीयवैश्वदेवपौष्णास्तृचाःशेषाआप्योन्त्याध्यर्धाग्नेय्यप्स्वन्तःपुरउष्णिकूपरानुष्टुप्तिस्रश्चान्त्याएकविंशीप्रतिष्ठा कस्यपंचोनाजीगर्तिःशुनःशेपःसकृत्रिमोवैश्वामित्रोदेवरातोवारुणंतुत्रैष्टुभमादौकाय्याग्नेय्यौसावित्रस्तृचोगायत्रोस्यान्त्याभागीवा यच्चित्सैकावसिष्वदशाग्नेयंत्वश्वंसप्तोनागायत्रेन्त्यादैवीत्रिष्टुब्यत्रग्रावानवषळनुष्टुवादि यच्चिद्ध्यौलूखल्यौपरेमौसल्यौचप्रजापतेर्हरिश्चन्द्रस्यान्त्याचर्मप्रशंसावा यच्चित्सप्तपांक्तमावोद्व्यधिकास्माकंपादनिचृच्छश्वत्रिष्टुप्परौतृचावाश्विनोषस्यौत्वमग्नेव्यूनाहिरण्यस्तूपआग्नेयंत्रिष्टुबन्त्याष्टमीषोळश्यौचेन्द्रस्यपञ्चोना ॥ २ ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अयमष्टौ मेधातिथिर्ऋभवोगायत्री ।

२० ॐ अयंदेवायजन्मनेस्तोमोविप्रेभिरासया। अकारिरत्नधातमः १ यइ-
न्द्रायवचोयुजाततक्षुर्मनसाहरी । शमीभिर्यज्ञमाशत २ तक्षन्नासत्याभ्यांपरि-
ज्मानंसुखंरथम्। तक्षन्धेनुंसबर्दुघाम् ३ युवानापितरापुनःसत्यमन्त्राऋजूयवः।
ऋभवोविष्ट्यक्रत ४ संवोमदासोअग्मतेन्द्रेणचमरुत्वता । आदित्येभिश्चराज-
भिः ५॥१॥ उतत्यंचमसंनवंत्वष्टुर्देवस्यनिष्कृतम्। अकर्तचतुरःपुनः ६ तेनो
रत्नानिधत्तनत्रिरासाप्तानिसुन्वते। एकमेकंसुशस्तिभिः ७ अधारयन्तवह्नयो-
ऽभजन्तसुकृत्यया । भागंदेवेषुयज्ञियम् ८ ॥ २ ॥

इहषण्मेधातिथिरिन्द्राग्नी गायत्री ।

२१ इहेन्द्राग्नीउपह्वयेतयोरित्स्तोममुश्मसि। तासोमंसोमपातमा १ ताय-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

 



ज्ञेषुप्रशंसतेन्द्राग्नीशुंभतानरः। तागांयत्रेषुंगायत २ तामित्रस्यप्रशंस्तयइन्द्राग्नी ताहंवामहे। सोमपासोमंपीतये ३ उग्रासन्ताहवामहउपेदंसंवनंसुतम्। इन्द्राग्नी-एहगंच्छताम् ४ तामहान्तासदस्पतीइन्द्राग्नीरक्षंउब्जतम्। अप्रंजाःसन्त्वत्रिणंः ५ तेनंसत्येनंजागृतमधिंप्रचेतुनेंपदे। इन्द्राग्नीशर्मयच्छतम् ६ ॥ ३ ॥

प्रातर्युजाएकविंशतिर्मेधातिथिराद्यानांचतसृणामश्विनौ ततश्चतसृणांसविता ततोद्वयोरग्निः एका दश्यादेव्यःद्वादश्याइन्द्राणीवरुणान्यग्नाय्यस्ततस्तोद्वयोर्द्यावापृथिव्यौपञ्चदश्यापृथिवी ततःषण्णांविष्णुरतोदेवाइत्यस्यादेवावा गायत्री।

२२ प्रातर्युजाविबोधयाश्विनावेहगंच्छताम्। अस्यसोमंस्यपीतयें १ यासु-रथांरथीतंमोभादेवादिंविस्पृशा। अश्विनाताहंवामहे २ यावांकशामधुंम-त्यश्विंनासूनृतांवती। तयांयज्ञंमिंमिक्षतम् ३ नहिवामस्तिंदूरकेयत्रारथेंनगच्छं-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

थः । अश्विनासोमिनौगृहम् ४ हिरण्यपाणिमूतयेसवितारमुपह्वये । सचेत्तादेवतापदम् ५ ॥ ४ ॥ अपांनपातमवसेसवितारपस्तुहि । तस्यव्रतान्युश्मसि ६ विभक्तारंहवामहेवसोश्चित्रस्यराधसः । सवितारंनृचक्षसम् ७ सखायआनिषीदतसवितास्तोम्योनुनः । दाताराधांसिशुम्भति ८ अग्नेपत्नीरिहावहदेवानामुशतीरुप । त्वष्टारंसोमपीतये ९ आग्नाअग्नइहावसेहोत्रांयविष्ठभारतीम् । वरूत्रींधिषणांवह १० ॥ ५ ॥ अभिनोदेवीरवसामहःशर्मणानृपत्नीः । अच्छिन्नपत्राःसचन्ताम् ११ इहेन्द्राणीमुपह्वयेवरुणानींस्वस्तये । अग्नायींसोमपीतये १२ महीद्यौःपृथिवीचनइमंयज्ञंमिमिक्षताम् । पिपृतांनोभरीमभिः १३ तयोरिद्घृतवत्पयोविप्रारिहन्तिधीतिभिः । गन्धर्वस्यध्रुवेपदे १४ स्योनापृथिविभवानृक्षरानिवेशनी । यच्छानःशर्मसप्रथः १५ ॥ ६ ॥ अतोदेवाअवन्तु-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नोयतोविष्णुर्विचक्रमे । पृथिव्याःसप्तधामभिः १६ इदंविष्णुर्विचक्रमेत्रेधानिदं-
धेपदम् । समूळ्हमस्यपांसुरे १७ त्रीणिपदाविचक्रमेविष्णुर्गोपाअदाभ्यः। अतो
धर्माणिधारयन् १८ विष्णोःकर्माणिपश्यतयतोव्रतानिपस्पशे । इन्द्रस्ययुज्यः
सखा १९ तद्विष्णोःपरमंपदंसदापश्यन्तिसूरयः । दिवीवचक्षुराततम् २० तद्वि-
प्रासोविपन्यवोजागृवांसःसमिन्धते । विष्णोर्यत्परमंपदम् २१ ॥ ७ ॥



तीव्राश्चतुर्विंशतिर्मेधातिथिःप्रथमायावायुस्ततोद्वयोरिन्द्रवायू ततश्चतसृणांतृचांमित्रावरुणौइन्द्रो मरुत्वान्विश्वेदेवाःपूषाशिष्टानामापःअन्त्याध्यर्धाआग्नेयी गायत्री । एकोनविंशी पुरउष्णिक् ततोनुष्टुभः एकविंशी प्रतिष्ठा ।

२३ तीव्राःसोमासआगह्याशीर्वन्तःसुताइमे । वायोतान्प्रस्थितान्पिब १
उभादेवादिविस्पृशेन्द्रवायूहवामहे । अस्यसोमस्यपीतये २ इन्द्रवायूमनोजु-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वाविप्राहवन्तऊतयै । सहस्राक्षाधियस्पती ३ मित्रंवयंहवामहेवरुणंसोमपीत-
ये । जज्ञानापूतदक्षसा ४ ऋतेनयावृतावृधावृतस्यज्योतिषस्पती । तामित्रा-
वरुणाहुवे ५ ॥ ८ ॥ वरुणःप्राविताभुवन्मित्रोविश्वाभिरूतिभिः । करतांनः
सुराधसः ६ मरुत्वन्तंहवामहइन्द्रमासोमपीतये । सजूर्गणेनतृम्पतु ७ इन्द्र-
ज्येष्ठामरुद्गणादेवासःपूषरातयः । विश्वेममश्रुताहवम् ८ हतवृत्रंसुदानवइन्द्रे-
णसहसायुजा । मानोदुःशंसईशत ९ विश्वान्देवान्हवामहेमरुतःसोमपीतये ।
उग्राहिपृश्निमातरः १० ॥ ९ ॥ जयतामिवतन्यतुर्मरुतामेतिधृष्णुया । यच्छुभं
याथनानरः ११ हस्काराद्विद्युतस्पर्यतोजाताअवन्तुनः । मरुतोमृळयन्तुनः १२
आपूषञ्चित्रबर्हिषमाघृणेधरुणंदिवः । आजानष्टंयथापशुम् १३ पूषाराजानमा-
घृणिरपगूळ्हंगुहाहितम् । अविन्दच्चित्रबर्हिषम् १४ उतोसमह्यमिन्दुभिःष-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ड्युक्ताँअंनुसेषिंधत् । गोभिर्यवंनचर्कृषत् १५ ॥ १० ॥ अम्बयौयन्त्यध्वं-भिर्जामयोंअध्वरीयताम् । पृञ्चतीर्मधुंनापयंः १६ अमूर्याउपसूर्येयाभिर्वासू-र्यः सह । तानोंहिन्वन्त्वध्वरम् १७ अपोदेवीरुपंह्वयेयत्रगावःपिबंन्तिनः । सि-न्धुंभ्यःकर्त्वंहविः १८ अप्स्व१न्तरमृतमप्सुभेषजमपामुतप्रशंस्तये । देवाभवं-तवाजिनंः १९ अप्सुमेसोमोंअब्रवीदन्तर्विश्वांनिभेषजा । अग्निंचंविश्वशंम्भुवमा-पंश्चविश्वभेषजीः २० ॥ ११ ॥ आपंःपृणीतभेषजंवरूथंतन्वे३ंममं । ज्योक्-चसूर्यंदृशे २१ इदमांपःप्रवंहतयत्किंचंदुरितंमयिं । यद्वाहमंभिदुद्रोहयद्वांशेपउ-तानृंतम् २२ आपोंअद्यान्वंचारिषंरसेंनसमंगस्महि । पयंस्वानग्नआगंहितंमासं-सृंजवर्चंसा २३ संमांग्नेवर्चंसासृजसंप्रजयासमायुंषा । विद्युमेंअस्यदेवाइन्द्रों विद्यात्सहऋषिंभिः २४ ॥ १२ ॥ इति शाकलस० प्रथमेपञ्चमोनुवाकः ॥ ५ ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कस्यपञ्चोनाआजीगर्तिःशुनःशेपःसकृत्रिमोवैश्वामित्रोदेवरातः वरुणः प्रथमायाःप्रजापतिर्द्वितीयायाअग्निःअभित्वेतितृचःसावित्रःगायत्रः शिष्टास्त्रिष्टुभः ।

२४ कस्यनूनंकतमस्यामृतानांमनामहेचारुदेवस्यनाम । कोनोमह्याअदितयेपुनर्दात्पितरंचदृशेयंमातरंच १ अग्नेर्वयंप्रथमस्यामृतानांमनामहेचारुदेवस्यनाम । सनोमह्याअदितयेपुनर्दात्पितरंचदृशेयंमातरंच २ अभित्वादेवसवितरीशानंवार्याणाम् । सदावन्भागमीमहे ३ यश्चिद्धितइत्थाभगःशशमानःपुरानिदः । अद्वेषोहस्तयोर्दधे ४ भगभक्तस्यतेवयमुदशेमतवावसा । मूर्धानंरायआरभे ५ ॥ १३ ॥ नहितेक्षत्रंनसहोनमन्युंवयश्चनामीपतयन्तआपुः । नेमाआपोअनिमिषंचरन्तीर्नयेवातस्यप्रमिनन्त्यभ्वम् ६ अबुध्नेराजावरुणोवनस्योर्ध्वंस्तूपंददतेपूतदक्षः । नीचीनाःस्थुरुपरिबुध्नएषामस्मेअन्तर्निहिताःकेतवःस्युः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

७ उुरुंहिराजावरुणश्चकारसूर्यायपन्थामन्वैतवाउं । अपदेपादाप्रतिधातवेक-
रुतापंवक्ताहृंदयाविधंश्चित् ८ शतंतेराजन्भिषजंःसहस्रंमुवींगंभीरासुंमतिष्टैअ-
स्तु । वाधंस्वदूरेनिर्ऋतिंपराचैःकृतंचिदेनःप्रमुमुग्ध्यस्मत् ९ अमीयऋक्षानि-
हिंतासउच्चानक्तंदहंश्रेकुहंचिद्दिवैयुः । अदंब्धानिवरुंणस्यव्रतानिंविचाकंशञ्च-
न्द्रमानक्तमेति १० ॥ १४ ॥ तत्त्वांयामिब्रह्मंणावन्दंमानस्तदाशांस्तेयजंमानो-
हविर्भिः । अहैळमानोवरुणेहबोध्युरुंशंसमानआयुःप्रमोषीः ११ तदिन्नक्तंत-
द्दिवामह्यंमाहुस्तदयंकेतोहृदआविचंष्टे । शुनःशेपोयमह्वंद्गृभीतःसोअस्मान्रा-
जावरुंणोमुमोक्तु १२ शुनःशेपोह्यह्वंद्गृभीतस्त्रिष्वांदित्यंद्रुपदेषुंबद्धः । अवैनं-
राजावरुंणःससृज्याद्विद्वाँअदंब्धोविमुंमोक्तुपाशांन् १३ अवंतेहेळोवरुणनमो-
भिरवंयज्ञेभिरीमहेहविर्भिः । क्षयंन्नस्मभ्यंमसुरप्रचेताराजन्नेनांसिशिश्रथः



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कृतानि १४ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमंश्रथाय । अथावयमादि-
त्यव्रतेतवानागसोअदितयेस्याम १५ ॥ १५ ॥

यच्चिदेकविंशतिःशुनःशेपोवरुणोगायत्री ।

२५ यच्चिद्धितेविशोयथाप्रदेववरुणव्रतम् । मिनीमसिद्यविद्यवि १ मानो-
वधायहत्नवेजिहीळानस्यरीरधः।माहृणानस्यमन्यवे २ विमृळीकायतेमनोरथी-
रश्वंनसन्दितम् । गीर्भिर्वरुणसीमहि ३ पराहिमेविमन्यवःपतन्तिवस्यइष्टये ।
वयोनवसतीरुप ४ कदाक्षत्रश्रियंनरमावरुणंकरामहे । मृळीकायोरुचक्षसम् ५
॥ १६ ॥ तदित्समानमाशातेवेनन्तान्नप्रयुच्छतः । धृतव्रतायदाशुषे ६ वेदा-
योवीनांपदमन्तरिक्षेणपतताम् । वेदनावःसमुद्रियः ७ वेदमासोधृतव्रतोद्वाद-
शप्रजावतः । वेदायउपजायते ८ वेदवातस्यवर्तनिमुरोर्ऋष्वस्यबृहतः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वेदायेअध्यासंते ९ निषंसादधृतव्रंतोवरुंणःपस्त्या ३ स्वा । साम्रांज्यायसुक्रतुंः १० ॥ १७ ॥ अतोविश्वान्यद्भुताचिकित्वाँअभिपंश्यति । कृतानियाचकर्त्वा ११ सनोंविश्वाहांसुक्रतुंरादित्यःसुपथांकरत् । प्रणआयूंषितारिषत् १२ बिभ्रं-द्रापिंहिंरण्ययंवरुंणोवस्तनिर्णिंजंम् । परिस्पशोनिषेंदिरे १३ नयंदिप्संन्ति-दिप्सवोनद्रुह्वांणोजनांनाम् । नदेवमभिमांतयः १४ उतयोमानुंषेष्वायशंश्च-क्रेअसाम्या । अस्माकंमुदरेष्वा १५ ॥ १८ ॥ परांमेयन्तिधीतयोगावोनगव्यूं-तीरनुं । इच्छन्तीरुरुचक्षंसम् १६ संनुवोंचावहैपुनर्यतोंमेमध्वाभृंतम् । होतेव-क्षदंसेप्रियम् १७ दर्शंनुविश्वदंर्शतंदर्शंरथमधिक्षमिं । एताजुंषतमेगिरंः १८ इमंमेंवरुणश्रुधीहवंमद्याचंमृळय । त्वामंवस्युराचंके १९ त्वंविश्वंस्यमेधि-रदिवश्चग्मश्चंराजसि । सयामंनिप्रतिंश्रुधि २० उदुंत्तमंमुंमुग्धिनोविपाशं-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मध्यमंचृत । अवाधमानिंजीवसे २१ ॥ १९ ॥

वसिष्व दश शुनःशेपोग्निर्गायत्री ।

२६ वसिंष्वाहिमिंयेध्यवस्त्राण्यूर्जांपते । सेमंनोंअध्वरंयज १ निनोहोता-वरेण्यःसदांयविष्ठमन्मंभिः । अग्नेंदिवित्मंतावचंः २ आहिष्मांसूनवेंपितापि-र्यजंत्यापयें । सखासख्येंवरेण्यः ३ आनोंवर्हीरिशादंसोवरुणोमित्रोअंर्यमा । सीदंन्तुमनुंषोयथा ४ पूर्व्यंहोतरस्यनोमन्दंस्वसख्यस्यंच । इमाउषुश्रुंधीगि-रंः ५ ॥ २० ॥ यञ्चिद्धिशश्वंतातनादेवंदेवंयजांमहे । त्वेइद्धूयतेहविः ६ प्रियो-नोंअस्तुविश्पतिर्होतांमन्द्रोवरेण्यः । प्रियाःस्वग्नयोंवयम् ७ स्वग्नयोहिवार्यं-देवासोंदधिरेचंनः । स्वग्नयोंमनामहे ८ अथांनउभयेषाममृतमर्त्यानाम् । मिथःसंन्तुप्रशंस्तयः ९ विश्वेंभिरग्नेअग्निभिरिमंयज्ञमिदंवचंः । चनोंधाः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सहसोयहो १० ॥ २१ ॥

अश्वं त्रयोदश शुनःशेपोऽग्निरन्त्यायाविश्वेदेवागायत्री अन्त्यात्रिष्टुप् ।

२७ अश्वंनत्वावारवन्तंवन्दध्याअग्निंनमोभिः । सम्राजंन्तमध्वराणाम् १ सघानःसूनुःशवसापृथुप्रगामासुशेवः । मीढ्वाँअस्माकंबभूयात् २ सनोदूराच्चासाच्चनिमर्त्यादघायोः । पाहिसदमिद्विश्वायुः ३ इममूषुत्वमस्माकंसनिंगायत्रंनव्यांसम् । अग्नेदेवेषुप्रवोचः ४ आनोभजपरमेष्वावाजेषुमध्यमेषु । शिक्षावस्वोअन्तमस्य ५ ॥ २२ ॥ विभक्तासिचित्रभानोसिन्धोरूर्माउपाकआ । सद्योदाशुषेक्षरसि ६ यमग्नेपृत्सुमर्त्यमवावाजेषुयंजुनाः । सयन्ताशश्वतीरिषः ७ नकिरस्यसहन्त्यपर्येताकयस्यचित् । वाजोअस्तिश्रवाय्यः ८ सवाजंविश्वचर्षणिरर्वद्भिरस्तुतरुता । विप्रेभिरस्तुसनिता ९ जराबोधतद्विविड्ढिविशेवि



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शेयज्ञियाय । स्तोमंरुद्रायदृशीकम् १० ॥ २३ ॥ सनोमहाँअंनिमानोधूमकेतुःपुरुश्चन्द्रः । धियेवाजायहिन्वतु ११ सरेवाँइवविश्पतिर्दैव्यःकेतुःशृणोतुनः । उक्थैरग्निर्बृहद्भानुः १२ नमोमहद्भ्योनमोअर्भकेभ्योनमोयुवभ्योनमआशिनेभ्यः । यजामदेवान्यदिशक्नवाममाज्यायसःशंसमावृक्षिदेवाः १३ ॥ २४ ॥

यत्रग्रावा नव शुनःशेपः चतुर्णांइन्द्रस्ततोद्वयोरुलूखलं ततोद्वयोरुलूखलमुसलेअन्त्यायाःप्रजापतिर्हरिश्चन्द्रोधिषवणचर्म वाआद्याः षळनुष्टुभः ततस्तिस्रोगायत्र्यः ।

२८ यत्रग्रावापृथुबुध्नऊर्ध्वोभवतिसोतवे । उलूखलसुतानामवेद्विन्द्रजल्गुलः १ यत्रद्वाविवजघनाधिषवण्याकृता । उलूखलसुतानामवेद्विन्द्रजल्गुलः २ यत्रनार्यपच्यवमुपच्यवंचशिक्षते । उलूखलसुतानामवेद्विन्द्रजल्गुलः ३ यत्र मन्थांविबध्नतेरश्मीन्यमितवाइव । उलूखलसुतानामवेद्विन्द्रजल्गुलः ४ य

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ऋ. सं. स्विद्धित्वंगृहेगृहउलूखलकयुज्यसे । इहद्युमत्तमंवदजयतामिवदुन्दुभिः ५ अ.१अ.२
॥ २५ ॥ उतस्मंतेवनस्पतेवातोविवात्यग्रमित् । अथोइन्द्रायपातवेसुनुसोममुलूखल ६ आयजीवाजसातमाताह्यु १ च्चाविजर्भृतः । हरीइवान्धांसिबप्सता ७ तानोअद्यवनस्पतीऋष्वावृष्वेभिःसोतृभिः । इन्द्रायमधुमत्सुतम् ८ उच्छिष्टं चम्वोर्भरसोमंपवित्रआसृज । निधेहिगोरधित्वचि ९ ॥ २६ ॥

॥ २० ॥

यच्चित्सप्त शुनःशेपइन्द्रःपङ्क्तिः ।

२९ यच्चिद्धिसत्यसोमपाअनाशस्ताइवस्मसि । आतूनंइन्द्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्त्रेषुतुवीमघ १ शिप्रिन्वाजानांपतेशचीवस्तवदंसना । आतूनंइन्द्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्त्रेषुतुवीमघ २ निष्वापयामिथूदृशासस्तामबुध्यमाने । आतूनंइन्द्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्त्रेषुतुवीमघ ३ ससन्तुत्याअरात- ॥ २० ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

योवोधंन्तुशूररातयः । आतूनंइन्द्रशंसयगोष्वश्वैषुशुभ्रिषुंसहस्रैषुतुवीमघ ४
समिंन्द्रगर्दभंमृणनुवन्तंपापयांमुया । आतूनंइन्द्रशंसयगोष्वश्वैषुशुभ्रिषुंसहस्रै-
षुतुवीमघ ५ पतांतिकुण्डृणाच्यांदूरंवातोवनादधि । आतूनंइन्द्रशंसयगोष्वश्वै-
षुशुभ्रिषुंसहस्रैषुतुवीमघ ६ सर्वंपरिक्रोशंजंहिजंभयांकृकदाश्वंम् । आतूनंइन्द्र-
शंसयगोष्वश्वैषुशुभ्रिषुंसहस्रैषुतुवीमघ ७ ॥ २७ ॥

आवोद्वाविंशतिः शुनःशेप इन्द्रः अन्त्यतृचयोरश्विनावुषाश्च गायत्री
एकादशीपादनिचृत् षोळशीत्रिष्टुप् ।

३० आवइन्द्रंक्रिविंयथावाजयन्तंःशतक्रंतुम् । मंहिंष्ठंसिञ्चइन्दुंभिः १
शतंवायःशुचींनांसहस्रंवासमांशिराम् । एदुंनिम्नंनरीयते २ संयन्मदांयशुष्मि
णंएनाह्यंस्योदरें । समुद्रोनव्यचोंदधे ३ अयमुंतेसमंतसिकपोतंइवगर्भंधिम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वचस्तच्चिन्नओहसे ४ स्तोत्रंराधानांपतेगिर्वाहोवीरयस्यते । विभूतिरस्तुसूनृता
५ ॥ २८ ॥ ऊर्ध्वस्तिष्ठानऊतयेस्मिन्वाजेशतक्रतो । सम॒न्येषुब्रवावहै ६
योगेयोगेतवस्तरंवाजेवाजेहवामहे । सखायइन्द्रमूतये ७ आघागमद्यदिश्रव-
त्सहस्रिणीभिरूतिभिः । वाजेभिरुपनोहवम् ८ अनुप्रत्नस्यौकसोहुवेतुविप्रतिंन-
रम् । यंतेपूर्वंपिताहुवे ९ तंत्वावयंविश्ववाराशास्महेपुरुहूत । सखेवसोजरितृ
भ्यः १० ॥ २९ ॥ अस्माकंशिप्रिणीनांसोमपाःसोमपाव्नाम् । सखेवज्रिन्त्स
खीनाम् ११ तथातदस्तुसोमपाःसखेवज्रिन्तथाकृणु । यथातउश्मसीष्टये १२
रेवतीर्नःसधमादइन्द्रेसन्तुतुविवाजाः । क्षुमन्तोयाभिर्मदेम १३ आघत्वावान्त्म
नाप्तःस्तोतृभ्योधृष्णवियानः । ऋणोरक्षंनचक्र्योः १४ आयद्दुवःशतक्रतवा
कामंजरितॄणाम् । ऋणोरक्षंनशचीभिः १५ ॥ ३० ॥ शश्वदिन्द्रःपोप्रुथद्भिर्जि



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

गायनानंदद्भिःशाश्वंसद्भिर्धनानि । सनोहिरण्यरथंदंसनावान्त्सनःसनितासनये-
सनोदात् १६ आश्विनावश्वावत्येषायातंशवीरया । गोमंदस्राहिरण्यवत् १७
समानयोजनोहिवांरथोदस्रावमर्त्यः । समुद्रेअश्विनेयते १८ न्यघ्न्यस्यमूर्धनि-
चक्रंरथस्ययेमथुः । परिद्यामन्यदीयते १९ कस्तंउषःकधप्रियेभुजेमर्तोअमर्त्ये ।
कंनक्षसेविभावरि २० वयंहितेअमंन्मह्यान्तादापराकात् । अश्वेनचित्रेअरुषि
२१ त्वन्त्येभिरागहिवाजेभिर्दुहितर्दिवः । अस्मेरयिंनिधारय २२ ॥ ३१ ॥
इति शाकलर्कसंहितायां प्रथमे मण्डले षष्ठोनुवाकः ॥ ६ ॥

त्वमग्नेष्टादशाङ्गिरसोहिरण्यस्तूपोग्निर्जगतीअष्टमीषोळश्यष्टादशीचत्रिष्टुभः ।

३१ त्वमंग्नेप्रथमोअङ्गिराऋषिर्देवोदेवानामभवःशिवःसखा । तवव्रतेकवयो-
विद्मनापसोजायन्तमरुतोभ्राजदृष्टयः १ त्वमंग्नेप्रथमोअङ्गिरस्तमःकविर्देवा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नांपरिंभूषसिव्रतम् । विभुर्विश्वंस्मैभुवंनायमेधिरोद्दिमाताशयुःकंतिधाचिंदायवे २ त्वमंग्नेप्रथमोमांतरिश्वंनआविर्भवसुक्रतूयाविवस्वंते । अरेजेतांरोदंसीहोतृवूर्ये संघ्नोभारमयंजोमहोवंसो ३ त्वमंग्नेमनंवेद्यामंवाशयःपुरूरवंसेसुकृतेसुकृत्तंरः । श्वात्रेणयत्पित्रोर्मुच्यंसेपर्यात्वापूर्वंमनयन्नापरंपुनः ४ त्वमंग्नेवृषभःपुंष्टिवर्धनउद्यंतस्रुचेभवसिश्रवाय्यंः । यआहुंतिंपरिवेदावषंट्कृतिमेकायुरग्रेविशंआविवासंसि ५ ॥ ३२ ॥ त्वमंग्नेवृजिनवंर्तनिंनरंसक्मंन्पिपर्षिविदथेंविचर्षणे । यःशूरंसातापरितक्म्येधनेंदभ्रेभिश्चित्समृताहंसिभूयंसः ६ त्वंतमंग्नेअमृतत्वउत्तमेमर्तंदधासिश्रवंसेदिवेदिंवे । यस्तातृषाणउभयायजन्मंनेमयंःकृणोषिप्रयआचंसूरये ७ त्वंनोंअग्नेसनयेधनानांयशसंकारुंकृणुहिस्तवानः । ऋध्यामकर्मापसानवेनदेवैर्द्यावापृथिवीप्रावंतंनः ८ त्वंनोंअग्नेपित्रोरुपस्थआदेवोदेवेष्वंनवद्यजागृं-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विः । तनूकृद्बोधिप्रमतिश्चकारवेत्वंकल्याणवसुविश्वमोपिषे ९ त्वमग्नेप्रमतिस्त्वंपितासिनस्त्वंवयस्कृत्तवंजामयोवयम् । सन्त्वारायःशतिनःसंसहस्रिणःसुवीरंयन्तिव्रतपामदाभ्य १० ॥ ३३ ॥ त्वामग्नेप्रथममायुमायवेदेवाअकृण्वन्नहुषस्यविश्पतिम् । इळामकृण्वन्मनुषस्यशासनींपितुर्यत्पुत्रोममकस्यजायते ११ त्वंनोअग्नेतवदेवपायुभिर्मघोनोरक्षतन्वश्चवन्द्य । त्राताताकस्यतनयेगवामस्यनिमेषंरक्षमाणस्तवव्रते १२ त्वमग्नेयज्यवेपायुरन्तरोनिषङ्गायचतुरक्षइध्यसे । योरातहव्योवृकायधायसेकीरेश्चिन्मन्त्रंमनसावनोषितम् १३ त्वमग्नउरुशंसायवाघतेस्पार्हंयद्रेक्णःपरमंवनोषितत् ।आध्रस्यचित्प्रमतिरुच्यसेपिताप्रपाकंशास्सिप्रदिशोविदुष्टरः १४ त्वमग्नेप्रयतदक्षिणंनरंवर्मेवस्यूतंपरिपासिविश्वतः । स्वादुक्षद्मायोवसतौस्योनकृज्जीवयाजंयजतेसोपमादिवः १५ ॥ ३४ ॥ इमा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मंग्नेशरणिंमीमृषोनइममध्वांनंयमगांमदूरात् । आपिःपिताप्रमंतिःसोम्या-
नांभृमिंरस्यृषिकृन्मर्त्यांनाम् १६ मनुष्वदंग्नेअङ्गिरस्वदंङ्गिरोययातिवत्सदंनेपू-
र्ववच्छुंचे । अच्छंयाह्यावंहादैव्यंजनमासांदयबर्हिषिंयक्षिंचप्रियम् १७ एतेनां-
ग्नेब्रह्मणावावृधस्वशक्तींवायत्तेंचकृमाविदावां । उतप्रणेष्यभिवस्योअस्मान्त्सं-
नंःसृजसुमत्यावाजंवत्या १८ ॥ ३५ ॥



इन्द्रस्य पञ्चदश हिरण्यस्तूपइन्द्रस्त्रिष्टुप् ।

३२ इन्द्रंस्यनुवीर्यांणिप्रवोंचंयानिंचकारंप्रथमानिंवज्री । अहन्नहिमन्वप-
स्ततर्दप्रवक्षणांअभिनत्पर्वंतानाम् १ अहन्नहिंपर्वंतेशिश्रियाणन्त्वष्टांस्मैवज्रंस्व-
र्यंन्ततक्ष । वाश्राइंवधेनवंःस्यन्दंमानाअञ्जंःसमुद्रमवंजग्मुरापंः २ वृषायमांणोवृ
णीतसोमंत्रिकंद्रुकेष्वपिबत्सुतस्यं । आसायंकंमघवांदत्तवज्रमहंन्नेनम्प्रथमजाम्



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

हीनाम् ३ यदिन्द्राहन्प्रथमजामहीनामान्मायिनाममिनाःप्रोतमायाः । आत्सूर्यं
जनयन्द्यामुषासंतादीत्नाशत्रुंनकिलाविवित्से ४ अहन्वृत्रंवृत्रतरंव्यंसमिन्द्रो
वज्रेणमहतावधेन । स्कन्धांसीवकुलिशेनाविवृक्णाहिःशयतउपपृक्पृथिव्याः
५ ॥ ३६ ॥ अयोद्धेवदुर्मदआहिजुह्वेमहावीरंतुविबाधमृजीषम् । नातारीदस्य-
समृतिंवधानांसंरुजानाःपिपिषइन्द्रशत्रुः ६ अपादहस्तोअपृतन्यदिन्द्रमास्य-
वज्रमधिसानौजघान । वृष्णोवध्रिःप्रतिमानंबुभूषन्पुरुत्रावृत्रोअशयद्व्यस्तः ७
नदन्नभिन्नममुयाशयानम्मनोरुहाणाअतियन्त्यापः । याश्चिद्वृत्रोमहिनापर्यतिष्ठ-
त्तासामहिःपत्सुतःशीर्बभूव ८ नीचावयाअभवद्वृत्रपुत्रेन्द्रोअस्याअववधर्जभार ।
उत्तरासूरधरःपुत्रआसीद्दानुःशयेसहवत्सानधेनुः ९ अतिष्ठन्तीनामनिवेशना-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नांकाष्ठांनांमध्येनिहिंतंशरींरम् । वृत्रस्यंनिण्यंविचंरन्त्यापोदीर्घंतमआशंयदि-
न्द्रंशत्रुः १० ॥ ३७ ॥ दासपंत्नीरहिंगोपाअतिष्ठन्निरुंद्धाआपंःपणिनेंवगावंः ।
अपांबिलमपिंहितंयदासींद्वृत्रंजंघन्वाँअपतद्ववार ११ अश्व्योवारोंअभवस्त-
दिंन्द्रसृकेयत्त्वांप्रत्यहंन्देवएकंः । अजंयोगाअजंयःशूरसोममवांसृजःसर्तवेसप्त-
सिन्धून् १२ नास्मैंविद्युन्नतंन्यतुःसिंषेधनयांमिहमकिंरद्ध्रादुनिंच । इन्द्रंश्चयद्यु-
युधातेअहिंश्चोतापरीभ्यौमघवाविजिंग्ये १३ अहेर्यातारंकमंपश्यइन्द्रहृदियत्ते-
जघ्नुषोभीरगंच्छत् । नवंचयन्नंवतिंचस्रवंन्तीःश्येनोनभीतोअतंरोरजांसि १४
इन्द्रोयातोवंसितस्यराजाशमंस्यचशृङ्गिणोवज्रंबाहुः । सेदुराजांक्षयतिचर्षणी-
नामरान्ननेमिःपरिताबंभूव १५ ॥ ३८ ॥ इति शा०क्० प्रथमाष्टके द्वितीयोध्यायः ॥ २ ॥





CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एतन्निश्चिद्द्वादशाश्विनंनवम्यन्त्येत्रिष्टुभौह्वयाम्येकादशसावित्रंनवमीजगत्याद्याचसालिङ्गोक्तदै-
वतपादामत्रोविंशतिः कण्वोघौरआग्नेयंप्रागाथमूर्ध्वऊषुयौप्यौक्रीळंपञ्चोनामारुतंहिगायत्रंतुकद्धप्रयद-
शप्रागाथंतूत्तिष्ठाष्टौ ब्राह्मणस्पत्यंयंरक्षन्तिनववरुणमित्रार्यम्णांमध्येतृचआदित्येभ्योगायत्रंहिसंपूष-
न्दशपौष्णंकद्रुद्रायनवरौद्रंतृतीयामैत्रावरुणीचान्त्यस्तृचः सौम्योन्त्यानुष्टुबग्नेषळूनाप्रस्कण्वः काण्वआ-
ग्नेयंतुप्रागाथमाद्योद्भृचोश्व्युषसांचत्वमग्नेदशानुष्टुभमर्धर्चोन्त्योदैवएषोपञ्चोनाश्विनंतुगायत्रम् ॥ ३ ॥

एतायामेति पञ्चदश हिरण्यस्तूपइन्द्रस्त्रिष्टुप् ।

३३ एतायामोपंगव्यन्तइन्द्रंमस्माकंसुप्रमंतिंवावृधाति । अनामृणःकुवि-
दादस्यरायोगवांकेतंपरंमावर्जतेनः १ उपेदहंधनदामप्रतीतंजुष्टांनश्येनोवंस-
तिंपंतामि । इन्द्रंनमस्यन्नुपमेभिंरर्कैर्यःस्तोतृभ्योहव्योअस्तियामंन् २ निस-
र्वसेनइषुधीँरंसक्तसमर्योगाअंजतियस्यवष्टि । चोष्कूयमांणइन्द्रभूरिंवामंमाप-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

णिभूँरस्मदधिंप्रवृद्ध ३ वधीर्हिंदस्युंधनिनंघनेनँएकश्चरंन्नुपशाकेभिंरिन्द्र । धनोरधिविषुणक्तेव्यायन्नयंज्वानःसनकाःप्रेतिमीयुः ४ परांचिच्छीर्षावंवृजुस्त- इन्द्रायंज्वानोयज्वंभिःस्पर्धमानाः । प्रयद्दिवोहंरिवःस्थातरुग्रनिरंव्रताँअंधमोरो- दस्योः ५॥ १॥ अयुंयुत्सन्ननवद्यस्यसेनामयातयन्तक्षितयोनवंग्वाः । वृषायुधो- नवध्रयोनिरंष्टाःप्रवद्भिरिन्द्राच्चितयंन्तआयन् ६ त्वमेतान्रुंदतोजक्षंतश्चायोधयोः रजंसइन्द्रपारे । अवादहोदिवआदस्युंमुच्चाप्रसुन्वतःस्तुंवतःशंसंमावः ७ चक्रा- णासंःपरीणहंपृथिव्याहिरंण्येनमणिनाशुम्भंमानाः । नहिन्वानासंस्तितिरुस्त- इन्द्रंपरिस्पशोंअदधात्सूर्येण ८ परियदिन्द्ररोदंसीउभेअबुंभोजीर्महिनाविश्वतः सीम् । अमंन्यमानाँअभिमन्यंमानैर्निर्ब्रह्मभिंरधमोदस्युंमिन्द्र ९ नयेदिवःपृथि- व्याअन्तंमापुर्नमायाभिंर्धनदांपर्यभूंवन् । युजंवज्रंवृषभश्चंक्रइन्द्रोनिज्योति-





CC-0. Jangamwadi Math Collection. Digitized by eGangotri

षातमसोगाअदुक्षत् १० ॥ २ ॥ अनुस्वधामक्षरन्नापोअस्यावर्धतमध्यआना-
व्यानाम् । सध्रीचीनेनमनसातमिन्द्रओजिष्ठेनहन्मनाहन्नभिद्यून् ११ न्यावि-
ध्यदिलीबिशस्यदृह्लाविशृङ्गिणमभिनच्छुष्णमिन्द्रः । यावत्तरोमघवन्यावदो-
जोवज्रेणशत्रुमवधीःपृतन्युम् १२ अभिसिध्मोअजिगादस्यशत्रून्वितिग्मेनवृ-
षभेणापुरोमेत् । संवज्रेणासृजद्वृत्रमिन्द्रःप्रस्वांमतिमतिरच्छाशदानः १३
आवःकुत्समिन्द्रयस्मिंश्चाकन्प्रावोयुध्यन्तंवृषभंदशद्युम् । शफच्युतोरेणुर्नक्षत-
द्यामुच्छ्वैत्रेयोनृषाह्यायतस्थौ १४ आवःशमंवृषभंतुग्र्यासुक्षेत्रजेषेमघवञ्छ्वित्र्यं-
गाम् । ज्योक्चिदत्रतस्थिवांसोअक्रञ्छत्रूयतामधरावेदनाकः १५ ॥ ३ ॥

त्रिश्चिद्द्वादश हिरण्यस्तूपोश्विनौजगती नवमीद्वादश्यौत्रिष्टुभौ ।

३४ त्रिश्चिन्नोअद्याभवतंनवेदसाविभुर्वांयामउतरातिरश्विना । युवोर्हियन्त्रं-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ऋ. सं.

॥ २६ ॥

हिम्येवृवासंसोभ्यायुंसेन्यांभवतंमनीुषिर्भिः १ त्रयंःपुवयोंमधुवाहंनेुरथेुसोमं-
स्यवेुनामनुविश्वइद्विदुः । त्रयंःस्कुंभासंःस्कभितासंआुरभेुत्रिर्नक्तंयाुथस्त्रिवश्वि-
नाुदिवां २ सुमाुनेअहुन्त्रिरंवद्यगोहनाुत्रिरुद्ययुज्ञंमधुनामिमिक्षतम् । त्रिर्वा-
जंवतीुरिषोंअश्विनायुवंदोुषाअुस्मभ्यंमुुषसंश्चपिन्वतम् ३ त्रिर्वुर्तिर्यातंुत्रिरनुंव्र-
तेुजनेुत्रिःसुंप्राुव्येंत्रेुधेवंशिक्षतम् । त्रिर्नाुन्द्यंवहतमश्विनायुवंत्रिःपृक्षोंअुस्मेअुक्ष-
रेंवपिन्वतम् ४ त्रिर्नोंरुयिंवंहतमश्विनायुवंत्रिर्देवतांताुत्रिरुुतावंतुंधियंः । त्रिस्सौं-
भगुत्वंत्रिरुुतश्रवांसिनस्त्रिष्ठंवांुसूरैदुहिुतारुंहुद्रथंम् ५ त्रिर्नोंअश्विनादिुव्यानि-
भेषुजात्रिःपार्थिवानिुत्रिरुंदत्तमुद्भ्यः । ओमानंशंुयोर्ममंकायसूुनवेंत्रिुधातुुशर्मं-
वहतंशुभस्पती ६ ॥ ४ ॥ त्रिर्नोंअश्विनायजुताुदिवेदिवेुपरिंत्रिुधातुंपृथिुवीमं-
शायतम् । तिुस्रोनांसत्यारथ्यापराुवतंआुत्मेवुवातुःस्वसंराणिगच्छतम् ७ त्रि-

अ.१अ.२

॥ २६ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रश्विनासिन्धुभिःसप्तमातृभिस्त्रयआहावास्त्रेधाहविष्कृतम् । तिस्रःपृथिवीरुप-
रिप्रवादिवोनाकंरक्षेथेद्युभिरक्तुभिर्हितम् ८ क्व १ त्रीचक्रात्रिवृतोरथस्यक्व १ त्रयो-
वन्धुरोयेसनीळाः । कदायोगोवाजिनोरासभस्ययेनयज्ञंनासत्योपयाथः ९ आनो
सत्यागच्छतंहूयतेहविर्मध्वःपिबतंमधुपेभिरासभिः । युवोर्हिपूर्वंसवितोषसोर-
थमृतायचित्रंघृतवन्तमिष्यति १० आनासत्यात्रिभिरेकादशैरिहदेवेभिर्यातंमधु-
पेयमश्विना । प्रायुस्तारिष्टंनीरपांसिमृक्षतंसेधतंद्वेषोभवतंसचाभुवा ११ आ-
नोअश्विनात्रिवृतारथेनार्वाञ्चंरयिंवहतंसुवीरम् । शृण्वन्तावामवसेजोहवीमि-
वृधेचनोभवतंवाजसातौ १२ ॥ ५ ॥

ह्वयाम्येकादश हिरण्यस्तूपःसविता आद्यालिङ्गोक्तदैवतपादा आ-
द्यानवमीचजगत्यौ शिष्टास्त्रिष्टुभः ।

३५ ह्वयाम्यग्निंप्रथमंस्वस्तयेह्वयामिमित्रावरुणाविहावसे । ह्वयामिरात्रीं-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

जगतोनिवेशनीह्वयामिदेवंसवितारमूतये १ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच । हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् २ यातिदेवःप्रवतायात्युद्वतायातिशुभ्राभ्यांयजतोहरिभ्याम् । आदेवोयातिसवितापरावतोपविश्वादुरिताबाधमानः ३ अभीवृतंकृशनैर्विश्वरूपंहिरण्यशम्यंयजतोवृहन्तम् । आस्थाद्रथंसविताचित्रभानुःकृष्णारजांसितविषींदधानः ४ विजनाञ्छयावाःशितिपादोअख्यन्रथंहिरण्यप्रउगंवहन्तः । शश्वद्विशःसवितुर्दैव्यस्योपस्थेविश्वाभुवनानितस्थुः ५ तिस्रोद्यावःसवितुर्द्वाउपस्थाँएकायमस्यभुवनेविराषाट् । आणिंनरथ्यममृताधितस्थुरिहब्रवीतुयउतच्चिकेतत् ६ ॥ ६ ॥ विसुपर्णोअन्तरिक्षाण्यख्यद्गभीरवेपाअसुरःसुनीथः । क्वेदानींसूर्यःकश्चिकेतकतमांद्यांरश्मिरस्याततान ७ अष्टौव्यख्यत्ककुभःपृथिव्यास्त्रीधन्वयोजनासप्तसिन्धू-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

न् । हि॒र॒ण्या॒क्षः स॑वि॒ता दे॒व आगा॒द्दध॒द्रत्ना॑ दा॒शुषे॒ वार्या॑णि ८ हिर॑ण्यपाणिः सवि॒ता विच॑र्षणिरु॒भे द्यावा॑पृथि॒वी अ॒न्तरी॑यते । अपामी॑वा॒ंबाध॑ते॒ वेति॒ सूर्य॑म॒भि कृ॒ष्णेन॒ रजं॑सा॒ द्याम॑ृणोति ९ हिर॑ण्यहस्तो॒ असु॑रः सुनी॒थः सु॑मृळी॒कः स्ववाँ॑ यात्व॒र्वाङ् । अ॒प॒सेध॑न्र॒क्षसो॑ यातु॒धाना॒नस्था॑द्दे॒वः प्र॑तिदो॒षं गृ॑णा॒नः १० ये ते॒ पन्थाः॑ सवितः पू॒र्व्यासो॑ऽरे॒णवः॑ सु॒कृ॑ता अ॒न्तरि॑क्षे । तेभि॑र्नो अ॒द्य प॒थिभिः॑ सु॒गेभी॒ रक्षा॑ च नो॒ अधि॑ च ब्रूहि देव ११ ॥ ७ ॥ इति शाकलकसंहितायां प्रथमे मण्डले सप्तमोऽनुवाकः ॥ ७ ॥

प्रवोविंशतिर्घौरः कण्वोऽग्निः ऊर्ध्वऊषुत्विति द्वे यूपदेवताके

भागाथम् (अयुजो बृहत्यः युजः सतोबृहत्यः)।

३६ प्रवो॑ य॒ह्वं पु॑रू॒णां वि॒शां दे॑वय॒तीना॑म् । अ॒ग्निं सू॒क्तेभि॒र्वचो॑भिरीमहे॒ यं सी॒मिद॒न्य ईळ॑ते १ जना॑सो अ॒ग्निं द॑धिरे सहो॒वृधं॑ ह॒विष्म॑न्तो विधेम ते । स त्वं नो॑ अ॒द्य सु-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आमातरास्थापयसेजिगत्नूअतइनोषिकर्वरापुरूणि ७ इमाब्रह्मबृहद्दिवोविवक्ती-
न्द्रायशूषमग्रियःस्वर्षाः।महोगोत्रस्यक्षयतिस्वराजोदुरश्चविश्वाअवृणोदपस्वाः ८
एवामहान्बृहद्दिवोआथर्वावोचत्स्वांतन्व१मिन्द्रमेव। स्वसारोमातरिभ्वरीररिप्रा
हिन्वन्तिचशवसावर्धयन्तिच ९ ॥ २ ॥

हिरण्यगर्भो दश हिरण्यगर्भः प्राजापत्यः कस्त्रिष्टुप् ।

१२१ हिरण्यगर्भःसमवर्तताग्रेभूतस्यजातःपतिरेकआसीत् । सदाधारपृ-
थिवींद्यामुतेमांकस्मैदेवायहविषाविधेम १ यआत्मदाबलदायस्यविश्वउपासतेप्र-
शिषंयस्यदेवाः। यस्यच्छायामृतंयस्यमृत्युःकस्मैदेवायहविषाविधेम २ यःप्राणतो
निमिषतोमहित्वैकइद्राजाजगतोबभूव । यईशेअस्यद्विपदश्चतुष्पदःकस्मैदेवाय
हविषाविधेम ३ यस्येमेहिमवन्तोमहित्वायस्यसमुद्रंरसयासहाहुः । यस्येमाः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रदिशोयस्यबाहूकस्मैदेवायहविषाविधेम ४ येनद्यौरुग्रापृथिवीचदृह्ळायेनस्वः स्तभितंयेननाकः । योअन्तरिक्षेरजसोविमानःकस्मैदेवायहविषाविधेम५॥ ३॥ यंक्रन्दसीअवसातस्तभानेअभ्यैक्षेतांमनसारेजमाने । यत्राधिसूरउदितोविभा- तिकस्मैदेवायहविषाविधेम ६ आपोहयद्बृहतीर्विश्वमायन्गर्भंदधानाजनयन्तीर- ग्निम् । ततोदेवानांसमवर्ततासुरेकःकस्मैदेवायहविषाविधेम ७ यश्चिदापोमहिना पर्यपश्यद्दक्षंदधानाजनयन्तीर्यज्ञम् । योदेवेष्वधिदेवएकआसीत्कस्मैदेवायहवि- षाविधेम ८ मानोहिंसीज्जनितायःपृथिव्यायोवादिवंसत्यधर्माजजान । य- श्चापश्चन्द्राबृहतीर्जजानकस्मैदेवायहविषाविधेम ९ प्रजापतेनत्वदेतान्यन्योवि- श्वाजातानिपरिताबभूव । यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयी- णाम् १० ॥ ४ ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वसुं नाष्टौ चित्रमहावासिष्ठोऽग्निर्जगती । प्रथमापञ्चम्यौ त्रिष्टुभौ ।

१२२ वसुंनचित्रमहसंगृणीषेवामंशेवमतिथिमद्विषेण्यम् । सरासतेशु-
रुधोविश्वधायसोऽग्निर्होतागृहपतिःसुवीर्यम् १ जुषाणोअग्नेप्रतिहर्यमेवचोवि-
श्वानिविद्वान्वयुनानिसुक्रतो । घृतनिर्णिग्ब्रह्मणेगातुमेरयतवदेवाअजनयन्न-
नुव्रतम् २ सप्तधामानिपरियन्नमर्त्योदाशद्दाशुषेसुकृतेमामहस्व । सुवीरे-
णरयिणाग्नेस्वाभुवायस्तआनट्समिधातंजुषस्व ३ यज्ञस्यकेतुंप्रथमंपुरो-
हितंहविष्मन्तईळतेसप्तवाजिनम् । शृण्वन्तमग्निंघृतपृष्ठमुक्षणंपृणन्तंदेवःपृणते
सुवीर्यम् ४ त्वंदूतःप्रथमोवरेण्यःसहूयमानोअमृतायमत्स्व । त्वांमर्जयन्मरुतो
दाशुषोगृहेत्वांस्तोमेभिर्भृगवोविरुरुचुः ५ ॥ ५ ॥ इषंदुहन्सुदुघांविश्वधायसं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यज्ञप्रियेयजंमानायसुक्रतो । अग्नेघृतस्नुस्त्रिऋतानिदीद्यद्वर्तिर्यज्ञंपरियन्त्सुंक्रतूयसे ६ त्वामिदस्याउषसोव्युंष्टिषुदूतंकृण्वानाअंयजन्तमानुंषाः । त्वांदेवामंहयाय्यांयवावृधुराज्यंमग्नेनिमृजन्तोंअध्वरे ७ नित्वावसिंष्ठाअह्वन्तवाजिनंगृणन्तोंअग्नेविदथेषुवेधसः । रायस्पोषंयजंमानेषुधारययूयंपातस्वस्तिभिःसदांनः ८ ॥ ६ ॥

अयं वेनोष्टौ वेनो वेनस्त्रिष्टुप् ।

१२३ अयंवेनश्चोदयत्पृश्निंगर्भाज्योतिर्जरायूरजंसोविमाने । इममपांसंगमेसूर्यस्यशिशुंनविप्रांमतिभींरिहन्ति १ समुद्रादूर्मिमुदिंयर्तिवेनोनंभोजाःपृष्ठंहर्यतस्यंदर्शि । ऋतस्यसानावधिंविष्टपिभ्राट्संमानंयोनिमभ्यनूषतव्राः २ स-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मानंपूर्वीरभिवांवशानास्तिष्ठंन्वत्सस्यंमातरःसनीळाः । ऋतस्यसानावधिचक्र-
माणारिहन्तिमध्वोअमृतस्यवाणीः ३ जानन्तोरूपमंकृपन्तविप्रांमृगस्यघोषंम-
हिषस्यहिग्मन् । ऋतेनयन्तोअधिसिन्धुमस्थुर्विदद्गंन्धर्वोअमृतानिनाम ४ अ-
प्सराजारमुंपसिष्मियाणायोषांबिभर्तिपरमेव्योमन् । चरंत्प्रियस्ययोनिषुप्रि-
यःसन्त्सीदंत्पक्षेहिरण्ययेसवेनः ५ ॥ ७ ॥ नाकेंसुपर्णमुपयत्पतंन्तंहृदावेनंन्तो
अभ्यचंक्षतत्वा । हिरंण्यपक्षंवरुंणस्यदूतंयमस्ययोनौशकुनंभुरण्युम् ६ ऊर्ध्वो
गंन्धर्वोअधिनाकेअस्थात्प्रत्यङ्चित्राबिभ्रंदस्यायुधानि । वसानोअत्कंसुरभिं
दृशेकंस्व१र्णनामंजनतप्रियाणि ७ द्रप्सःसंमुद्रमभियज्जिगातिपश्यन्गृध्रस्यच-
क्षसाविधर्मन् । भानुःशुक्रेणंशोचिषाचकानस्तृतीयेचक्रेरजसिप्रियाणि ८॥८॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इमं नो नव त्रिष्टुप् । द्वितीयादितिसृणामग्निर्ऋषिः । शिष्टानामग्निवरुणसोमानां-
निहवः । आद्यानां चतसृणामग्निर्देवता । अन्त्याया इन्द्रः । शिष्टानां यथा-
निपातम् । सप्तमी जगती ।

१२४ इमंनोअग्नउपंयज्ञमेहिपञ्चंयामंत्रिवृतंसप्ततंन्तुम् । असोहव्यवाळुत नःपुरोगाज्योगेवदीर्घंतमआशयिष्ठाः १ अदेवाद्देवःप्रचतागुहायन्प्रपश्यंमानो अमृतत्वमेमि । शिवंयत्सन्तमशिवोजहामिस्वात्सख्यादरणींनाभिंमेमि २ पश्यन्नन्यस्याअतिथिंवयायाऋतस्यधामविमिमेपुरूणि । शंसामिपित्रेअसुराय शेवंमयज्ञियाद्यज्ञियंभागमेमि ३ बह्वीःसमाअकरमन्तरस्मिन्निन्द्रंवृणानःपितरं जहामि । अग्निःसोमोवरुणस्तेच्यवन्तेपर्यावर्द्राष्ट्रंतदवाम्यायन् ४ निर्मायाउ त्येअसुराअभूवन्त्वंचमावरुणकामयासे । ऋतेनराजन्ननृतंविविञ्चन्ममराष्ट्रस्या-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

धिपत्यमेहिं ५॥१॥इदंस्वेरिदमिदांसवाममयंप्रकाशउर्वे१न्तरिक्षम् । हनांववृत्रं निरेहिंसोमहविष्कासन्तंहविषांयजाम ६ कविःकविवाद्विरूपमासंजदप्रभूती वरुणोनिरपःसृजत् । क्षेमंकृण्वानाजनयोनसिन्धवस्ताअस्यवर्णंशुचंयोभरिभ्र- ति ७ ताअस्यज्येष्ठमिन्द्रियंसचन्तेताईमाक्षेतिस्वधयामदन्तीः । ताईविशो नराजानंवृणानाबीभत्सुवोअपवृत्रादतिष्ठन् ८ बीभत्सूनांसयुजंहंसमाहुर- पांदिव्यानांसख्येचरन्तम् । अनुष्टुभमनुचर्चूर्यमाणमिन्द्रंनिचिक्युःकवयोम- नीषा ९ ॥ १० ॥

अहमष्टौ वागाम्भृणी वागाम्भृणी त्रिष्टुप् । उपाद्या जगती ।

१२५ अहंरुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुतविश्वदेवैः । अहंमित्रावरुणोभा बिभर्म्यहमिन्द्राग्नीअहमश्विनोभा १ अहंसोममाहनसंबिभर्म्यहंत्वष्टारमुतपू-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

षणंभगम् । अहंदधामिद्रविणंहविष्मतेसुप्राव्ये३यजमानायसुन्वते २ अहंरा-
ष्ट्रीसंगमनीवसूनांचिकितुषीप्रथमायज्ञियानाम् । तांमादेवाव्यदधुःपुरुत्राभूरि-
स्थात्रांभूर्यावेशयन्तीम् ३ मयासोअन्नमत्तियोविपश्यतियःप्राणितियईंशृणोत्यु-
क्तम् । अमन्तवोमांतउपक्षियन्तिश्रुधिश्रुतश्रद्धिवंतेवदामि ४ अहमेवस्वयमि-
दंवदामिजुष्टंदेवेभिरुतमानुषेभिः । यंकामयेतंतमुग्रंकृणोमितंब्रह्माणंतमृषिंतं-
सुमेधाम् ५ ॥ ११ ॥ अहंरुद्रायधनुरातनोमिब्रह्मद्विषेशरवेहन्तवाउ । अहंज-
नायसमदंकृणोम्यहंद्यावापृथिवीआविवेश ६ अहंसुवेपितरमस्यमूर्धन्ममयो-
निरप्स्व१न्तःसमुद्रे । ततोवितिष्ठेभुवनानुविश्वोतामूंद्यांवर्ष्मणोपस्पृशामि ७
अहमेववातइवप्रवाम्यारभमाणाभुवनानिविश्वा । परोदिवापरएनापृथिव्यैता-
वतीमहिनासंबभूव ८ ॥ १२ ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

न तमष्टौ कुल्मलबर्हिषः शैलूषिरंहोमुग्वा वामदेव्यो

विश्वेदेवा उपरिष्टाद्बृहती । अन्त्या त्रिष्टुप् ।

१२६ नतमंहोनदुरितंदेवासोअष्टमर्त्यम् । सजोषसोयमर्यमामित्रोनयन्तिवरुणोअतिद्विषः १ तद्धिवयंवृणीमहेवरुणमित्रार्यमन् । येनानिरंहसोयूयंपाथनेथाचमर्त्यमतिद्विषः २ तेनूनंनोऽयमूतयेवरुणोमित्रोअर्यमा । नयिष्ठाउनोनेषणिपर्षिष्ठाउनःपर्षण्यतिद्विषः ३ यूयंविश्वंपरिपाथवरुणोमित्रोअर्यमा । युष्माकंशर्मणिप्रियेस्यामसुप्रणीतयोऽतिद्विषः ४ आदित्यासोअतिस्रिधोवरुणोमित्रोअर्यमा । उग्रंमरुद्भीरुद्रंहुवेमेन्द्रमग्निंस्वस्तयेऽतिद्विषः ५ नेतारऊषुणस्तिरोवरुणोमित्रोअर्यमा । अतिविश्वानिदुरिताराजानश्चर्षणीनामतिद्विषः ६ शुनमस्मभ्यमूतयेवरुणोमित्रोअर्यमा । शर्मयच्छन्तुसप्रथआदित्यासोयदीमहे

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अतिद्विषः ७ यथाहत्यद्वसवोगौर्यंचित्पदिषितामर्मुञ्चतायजत्राः । एवोष्व१स्मन्मुञ्चताव्यंहः प्रतार्यग्नेप्रतरंनआयुः ८ ॥ १३ ॥

रात्र्यष्टौ कुशिकः सौभरो रात्रिर्वा भारद्वाजी रात्रिस्तवो गायत्री ।

१२७ रात्रीव्यंख्यदायतीपुरुत्रादेव्य१क्षभिः । विश्वाअधिश्रियोऽधित १ ओर्वप्राअमर्त्यानिवतोदेव्यु१द्वतः । ज्योतिषाबाधतेतमः २ निरुस्वसारमस्कृतोषसंदेव्यायती । अपेदुहासतेतमः ३ सानोअद्ययस्यावयंनितेयामन्नविक्ष्महि । वृक्षेनवंसतिंवयः ४ निग्रामासोअविक्षतनिपद्वन्तोनिपक्षिणः । निश्येनासश्चिदर्थिनः ५ यावयावृक्यं१वृकंयवयस्तेनमूर्म्ये । अथानःसुतराभव ६ उपमापेपिशत्तमःकृष्णंव्यक्तमस्थित । उषऋणेवयातय ७ उपतेगाइवाकरंवृणीष्व दुहितर्दिवः । रात्रिस्तोमंनजिग्युषे ८ ॥ १४ ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ममाग्ने नव विहव्यो विश्वेदेवास्त्रिष्टुप् । अन्त्या जगती ।

१२८ ममांग्नेवर्चोंविहवेष्वंस्तुवयंत्वेन्धांनास्तुन्वंपुषेम । मह्यंनमन्तांप्रदिशुश्चतंस्रस्त्वयाध्यंक्षेणपृतनाजयेम १ ममदेवाविंहवेसंन्तुसर्वइन्द्रंवन्तोमरुतोविष्णुरग्निः । ममान्तरिक्षमुरुलौकमस्तुमह्यंवातःपवतांकामेअस्मिन् २ मयिदेवाद्रविणमायंजन्तांमय्याशीरंस्तुमयिदेवहूंतिः । दैव्याहोतांरोवनुषन्तपूर्वे ऽरिष्टाःस्यामतन्वांसुवीराः ३ मह्यंयजन्तुममयानिहव्याकूतिःसत्यामनंसोमे अस्तु । एनोमानिगांकतमच्चनाहंविश्वेदेवासोअधिवोचतानः ४ देवींःषळुर्वीरुरुनःकृणोतविश्वेदेवासइहवीरयध्वम् । माहांस्महिप्रजयामातनूभिर्मारंधाम द्विषतेसोमराजन् ५ ॥ १५ ॥ अग्नेमन्युंप्रतिनुदन्परेषामदब्धोगोपाःपरिपाहिनस्त्वम् । प्रत्यञ्चोयन्तुनिगुतःपुनस्ते३मैषांचित्तंप्रबुधांविनेशत् ६ धाताधातॄणां-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भुवनस्ययस्पतिंदेवंत्रातारमभिमातिषाहम् । इमंयज्ञमश्विनोभाबृहस्पतिंर्देवाः पान्तुयजमानंन्यर्थात् ७ उरुव्यचानोमहिषःशर्मयंसदस्मिन्हवेपुरुहूतःपुरुक्षुः । सनःप्रजायैहर्यश्वमृळयेन्द्रमानोरीरिषोमापरादाः ८ येनःसपत्नाअपतेभवन्त्विन्द्राग्निभ्यामवबाधामहेतान् । वसंवोरुद्राआदित्याउपरिस्पृशंमोग्रंचेत्तारमधिराजमंक्रन् ९॥१६॥ इति शाकलर्क्संहितायां दशमे मण्डले दशमोनुवाकः॥१०॥१०॥

नासत्सप्त प्रजापतिः परमेष्ठी भाववृत्तं त्रिष्टुप् ।

१२९ नासदासीन्नोसदासीत्तदानींनासीद्रजोनोव्योमापरोयत् । किमावरीवः कुहकस्यशर्मन्नम्भःकिमासीद्गहनंगभीरम् १ नमृत्युरासीदमृतंनतर्हिनरात्र्याअह्नआसीत्प्रकेतः । आनीदवातंस्वधयातदेकंतस्माद्धान्यन्नपरःकिंचनास २ तमआसीत्तमसागूळ्हमग्रेऽप्रकेतंसलिलंसर्वमाइदम् । तुच्छ्येनाभ्वपिहितंयदा-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सीत्तपंसस्तन्मंहिनाजायतैकंम् ३ कामस्तदग्रेसमंवर्ततांधिमनंसोरेतंःप्रथमंय-
दासीत् । सतोबन्धुमसंतिनिरंविन्दन्हृदिप्रतीष्यांकवयोमनीषा ४ तिरश्चीनो
वितंतोरश्मिरेषामधःस्विदासी३दुपरिंस्विदासी३त् । रेतोधाआंसन्महिमानंआ-
सन्त्स्वधाअवस्तात्प्रयंतिःपरस्तात् ५ कोअद्धावेंदकइहप्रवोंचत्कुतआजांताकु-
तंइयंविसृंष्टिः । अर्वाग्देवाअस्यविसर्जनेनाथाकोवेंदयतंआबभूवं ६ इयंविसृंष्टि-
र्यतंआबभूवयदिंवादधेयदिंवान । योअस्याध्यंक्षःपरमेव्योंमन्त्सोअङ्गवेंदयदिंवा
नवेदं ७ ॥ १७ ॥

यो यज्ञः सप्त यज्ञः प्राजापत्यो भाववृत्तं त्रिष्टुप् । आद्या जगती ।

१३० योयज्ञोविश्वतस्तन्तुंभिस्ततएकंशतंदेवकर्मेभिरायंतः । इमेवंयन्ति
पितरोयआंययुःप्रवयापवयेत्यांसतेतते १ पुमाँएनंतनुतउत्कृंणत्तिपुमान्वितंत्ने

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अधिनाकेंअस्मिन् । इमेमयूखाउपसेदुरूसदःसामांनिचक्रुस्तसंराण्योतंवे २ कासीत्प्रमाप्रंतिमाकिंनिदानमाज्यंकिमासीत्परिधिःकआसीत् । छन्दःकिमासीत्प्रउगंकिमुकथंयद्देवादेवमयंजन्तविश्वे ३ अग्नेर्गायत्र्यंभवत्सयुग्वोष्णिहंया सवितासंबंभूव । अनुष्टुभासोमंउकथैर्महंस्वान्बृहस्पतेर्बृहतीवाचंमावत् ४ विराण्मित्रावरुणयोरभिश्रीरिन्द्रस्यत्रिष्टुबिहभागोअह्नः । विश्वान्देवाञ्जगत्याविवेशतेनंचाक्लृप्रऋषंयोमनुष्याः ५ चाक्लृप्रेतेनऋषंयोमनुष्यांयज्ञेजातेपितरोंनःपुराणे । पश्यंन्मन्येमनंसाचक्षसातान्यइमंयज्ञमयंजन्तपूर्वे ६ सहस्तोमाःसहछंन्दसआवृतःसहप्रंमाऋषंयःसप्तदैव्याः । पूर्वेषांपन्थामनुदृश्यधीराअन्वालेभिरेरथ्योइनरश्मीन् ७ ॥ १८ ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अप प्राच सप्त सुकीर्तिः काक्षीवत इन्द्रस्त्रिष्टुप् । चतुर्थीपञ्चम्योरश्विनौ
देवता । चतुर्थ्यनुष्टुप् ।

१३१ अपप्राचंइन्द्रविश्वाँअमित्रानपापाचोअभिभूतेनुदस्व । अपोदींचोअ-
पंशूराधराचंउरौयथातवशर्मन्मदेम १ कुविदङ्गयवमन्तोयवंचिद्यथादान्त्यनुपूर्वं
वियूयं । इहेहैषांकृणुहिभोजनानियेबर्हिषोनमोवृक्तिंनजग्मुः २ नहिस्थूर्यृतुथा
यातमस्तिनोतश्रवोविविदेसंगमेषु । गव्यन्तइन्द्रंसख्यायविप्राअश्वायन्तोवृषणं
वाजयन्तः ३ युवंसुराममश्विनानमुचावासुरेसचा । विपिपानाशुभस्पतीइन्द्रं
कर्मस्वावतम् ४ पुत्रमिवपितरावश्विनोभेन्द्रावथुःकाव्यैर्दंसनाभिः । यत्सुरामं
व्यपिबःशचीभिःसरस्वतीत्वामघवन्नभिष्णक् ५ इन्द्रःसुत्रामास्ववाँअवोभिः
सुमृळीकोभवतुविश्ववेदाः । बाधतांद्वेषोअभयंकृणोतुसुवीर्यस्यपतयःस्याम ६

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ऋ. सं. तस्यंवयंसुंमतौयज्ञियस्यापिंभद्रेसौमनसेस्याम । ससुत्रामास्ववाँइन्द्रोअस्मेआराच्चिद्द्वेषःसनुतर्युयोतु ७ ॥ ११ ॥ अ.८अ ७

॥६५८॥ ईजानं सप्त शकपूतो नार्मेधो मित्रावरुणौ । आद्याया लिङ्गोक्तदेवताः । सैव न्यङ्कुसारिणी । द्वितीयाषष्ठ्यौ प्रस्तारपङ्क्ती । अन्त्या महासतोबृहती । शिष्टा विराड्रूपाः ।

१३२ ईजानमिद्द्यौर्गूर्तावसुरीजानंभूमिंरभिप्रंभूषणि । ईजानंदेवावश्विनावभिसुम्नैरंवर्धताम् १ तावांमित्रावरुणाधारयत्क्षितीसुषुम्नेषितत्वतायजामसि । युवोःक्राणायंसख्यैरभिष्यांमरक्षसंः २ अधांचिन्नुयद्दिधिषामहेवामभिप्रियंरेक्णःपत्यमानाः । दद्वाँवायत्पुष्यंतिरेक्णःसम्वारन्नकिंरस्यमघानि ३ असावन्योअसुरसूयतद्यौस्त्वंविश्वेषांवरुणासिराजा । मूर्धारथंस्यचाकन्नैतावतैनंसान्तकध्रुक् ४ अस्मिन्त्स्वे३तच्छकंपूतएनोहितेमित्रेनिगंतान्हन्तिवीरान् । अ- ॥६५८॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वोर्वायद्धात्तनूष्ववंःप्रियासुंयज्ञियास्ववौं ५ युवोर्हिमातादितिर्विचेतसाद्यौर्नभू-
मिःपर्यसापुपूतनिं । अवंप्रियादिदिष्टनसूरोनिनिक्तरश्मिभिः ६ युवंह्यप्रराजा-
वसींदतंतिष्ठद्रथंनधूर्षदंवनर्षदंम् । तानंःकणूकयन्तीर्नृमेधंस्तत्रेअंहंसःसुमेधं-
स्तत्रेअंहंसः ७ ॥ २० ॥

भो षु सप्त सुदाः । पैजवन इन्द्रः । आद्यास्तिस्रः शक्वर्यः । अन्त्या त्रिष्टुप् । शिष्टा महापङ्क्तयः ।

१ ३ ३ प्रोष्वंस्मैपुरोरथमिन्द्रायशूषमंर्चत । अभीकेचिदुलोककृत्सङ्गेसमत्सु
वृत्रहास्माकंबोधिचोदितानभन्तामन्यकेषांज्याकाअधिधन्वंसु १ त्वंसिन्धूँरवा-
सृजोऽधराचोअहन्नहिंम् । अशत्रुरिन्द्रजज्ञिषेविश्वंपुष्यसिवार्यंतंत्वापरिष्वजाम-
हेनभन्तामन्यकेषांज्याकाअधिधन्वंसु २ विषुविश्वाअरातयोऽर्योनंशन्तनोधि-
यः । अस्तासिशत्रवेवधंयोनंइन्द्रजिघांसतियातेरातिर्ददिर्वसुनभन्तामन्यकेषां

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ज्याकाअधिधन्वसु ३ योनइन्द्राभितोजनोवृकायुरादिदेशति । अधस्पदंतमीं कृधिविबाधोअसिसासहिर्नभन्तामन्यकेषांज्याकाअधिधन्वसु ४ योनइन्द्राभिदासतिसनाभिर्यश्चनिष्ट्यः । अवतस्यबलंतिरमहीवद्यौरधत्मनानभन्तामन्यके षांज्याकाअधिधन्वसु ५ वयमिन्द्रत्वायवःसखित्वमारभामहे । ऋतस्यनःपथा नयातिविश्वानिदुरितानभन्तामन्यकेषांज्याकाअधिधन्वसु ६ अस्मभ्यंसुत्वमिन्द्रतांशिक्षयादोहंतेप्रतिवरंजरित्रे । अच्छिद्रोध्नीपीपयद्यथानःसहस्रंधारापयसा महीगौः ७ ॥ २१ ॥

उभे यत्सप्त मांधाता यौवनाश्व इन्द्रो महापङ्क्तिः । अन्त्याध्यर्धर्चस्य गोधा । सप्तमी पङ्क्तिः ।

१३४ उभेयदिन्द्ररोदसीआपप्राथोषाइव । महान्तंत्वामहीनांसम्राजंचर्षणीनांदेवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत् १ अवस्मदुर्हणायतोमर्तस्यतनुहि



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्थिरम् । अधस्पदंतमींकृधियोअस्माँआदिदैशतिदेवीजनिंत्र्यजीजनद्भद्राजनिं-
त्र्यजीजनत् २ अवत्याबृहतीरिषोविश्वश्चंन्द्राअमित्रहन् । शचीभिःशक्रधूनु-
हीन्द्रविश्वाभिरूतिभिर्देवीजनित्र्यजीजनद्भद्राजनिंत्र्यजीजनत् ३ अवयत्त्वंश-
तक्रतविन्द्रविश्वांनिधूनुषे । रयिंनसुन्वतेसचासहस्रिणीभिरूतिभिर्देवीजनित्र्य-
जीजनद्भद्राजनिंत्र्यजीजनत् ४ अवस्वेदाइवाभितोविष्वकपतन्तुदिद्यवः । दूर्वा-
याइवतन्तवोव्यस्मदेतुदुर्मतिर्देवीजनिंत्र्यजीजनद्भद्राजनिंत्र्यजीजनत् ५ दी-
र्घंह्यङ्कुशंयथाशक्तिंबिभर्षिमन्तुमः । पूर्वेणमघवन्पदाजोवयांयथायमोदेवीज-
नित्र्यजीजनद्भद्राजनिंत्र्यजीजनत् ६ नकिंर्देवामिनीमसिनकिरायोपयामसि
मन्त्रश्रुत्यंचरामसि । पक्षेभिरपिकक्षेभिरत्राभिसंरभामहे ७ ॥ २२ ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यस्मिन्सप्त कुमारो यामायनो यमोनुष्टुप् ।

१३५ यस्मिन्वृक्षेसुपलाशेदेवैःसंपिबंतेयमः।अत्रानोविश्पतिःपितापुराणाँअ-नुवेनति १ पुराणाँअनुवेनन्तंचरन्तंपापयामुया । असूयन्नभ्यचाकशंतस्माअ-स्पृहयंपुनः २ यंकुमारनवंरथमचक्रंमनसाकृणोः । एकेषंविश्वतःप्राञ्चमपश्यन्न-धितिष्ठसि ३ यंकुमारप्रावर्तयोरथंविप्रेभ्यस्परि । तंसामानुप्रावर्ततसमितोना-व्याहितम् ४ कःकुमारमजनयद्रथंकोनिरवर्तयत् । कःस्वित्तदद्यनोब्रूयादनुदे-यीयथाभवत् ५ यथाभवदनुदेयीततोअग्रमजायत । पुरस्ताद्बुध्नआततःपश्चान्नि-रयणंकृतम् ६ इदंयमस्यसादनंदेवमानंयदुच्यते । इयमस्यधम्यतेनाळीरयंगी-र्भिःपरिष्कृतः ७ ॥ २३ ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

केशी सप्त केशिनोनुष्टुप् । वातरशनपुत्रा जूतिवातजूतिविप्रजूति-
वृषाणककरिक्रतैतशऋष्यशृङ्गाः प्रत्यृचं क्रमेण ऋषयः ।

१३६ केश्य१ग्निंकेशीविषंकेशीबिंभर्तिरोदंसी । केशीविश्वंस्वंर्दृशेकेशीदं ज्योतिंरुच्यते १ मुनंयोवातंरशनाःपिशङ्गावसतेमलां । वातस्यानुध्राजिंयन्ति यद्देवासोअविंक्षत २ उन्मंदितामौनेंयेनवाताँआतंस्थिमावयम् । शरीरेदस्माकं यूयंमर्तासोअभिपंश्यथ ३ अन्तरिंक्षेणपततिविश्वारूपावचाकंशत् । मुनिर्देव- स्यंदेवस्यसौकृत्यायसखांहितः ४ वातस्याश्वोवायोःसखाथोदेवेषितोमुनिः । उभौसंमुद्रावाक्षेतियश्चपूर्वंउतापरः ५ अप्सरसांगन्धर्वाणांमृगाणांचरंणेचरंन् । केशीकेतंस्यविद्वान्त्सखास्वादुर्मदिंतंमः ६ वायुरंस्माउपांमन्थत्पिनष्टिस्माकुन- न्नमा । केशीविषस्यपात्रेणयद्रुद्रेणापिंबत्सह ७ ॥ २४ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उत देवाः सप्त विश्वेदेवा अनुष्टुप् । भरद्वाजकश्यपगौतमात्रिविश्वामित्र-
जमदग्निवसिष्ठा इति क्रमेण प्रत्यृचमृषयः ।

१३७ उतदेवाअवहितंदेवाउन्नयथापुनः । उतागश्चक्रुषंदेवादेवाजीवयथापु-
नः १ द्वाविमौवातौवातआसिन्धोरापरावतः । दक्षंतेअन्यआवातुपरान्योवातु
यद्रपः २ आवातवाहिभेषजंविवातवाहियद्रपः । त्वंहिविश्वभेषजोदेवानांदूतईय-
से ३ आत्वागमंशन्तातिभिरथोअरिष्टतातिभिः। दक्षंतेभद्रमाभार्षंपरायक्ष्मंसुवा-
मिते ४ त्रायन्तामिहदेवास्त्रायतांमरुतांगणः । त्रायन्तांविश्वाभूतानियथायमर-
पाअसत् ५ आपइद्वाउभेषजीरापोअमीवचातनीः । आपःसर्वस्यभेषजीस्ता-
स्तेकृण्वन्तुभेषजम् ६ हस्ताभ्यांदशशाखाभ्यांजिह्वावाचःपुरोगवी । अनाम-
यित्नुभ्यांत्वाताभ्यांत्वोपस्पृशामसि ७ ॥ २५ ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तव त्ये षडङ्ग औरव इन्द्रो जगती ।

१३८ तवत्यइंन्द्रसख्येषुवह्नंयकृतंमंन्वानाव्यंदर्दिरुर्वलम् । यत्रांदशस्यन्नुषसौरिणन्नपःकुत्सांयमन्मंन्नह्यंश्वदंसयंः १ अवांसृजःप्रस्वंश्वञ्चयोंगिरीनुदांजउस्राअर्पिबोमधुंप्रियम् । अवंर्धयोवनिनोंअस्यदंसंसाशुशोचसूर्यंऋतजांतयागिरा- २ विसूर्योमध्यैअमुचद्रथंदिवोविदद्दासायंप्रतिमानमार्यः । दृह्लानिपिप्रोरसुंरस्य- मायिनइन्द्रोव्यांस्यच्चकृवाँऋजिश्वंना ३ अनांधृष्टानिधृषितोव्यांस्यन्निधींरदेवाँअमृणदयास्यंः । मासेवसूर्योवसुपुर्यमांददेगृणानःशत्रूँरशृणाद्विरुक्मंता ४ अयुंद्धसेनोविभ्वांविभिन्दताद्दाशंद्वृत्रहातुज्यांनितेजते । इन्द्रंस्यवज्रांदबिभेदभिश्नथंःप्राक्रांमच्छुन्ध्यूरजंहादुषाअनंः ५ एतात्यातेश्रुत्यांनिकेवंलायदेकएकमकृणोरयज्ञम् । मासांविधानंमदधाअधिद्यवित्वयाविभिंन्नंभरतिप्रधिंपिता ६॥ २६ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सूर्यरश्मिः षट् देवगन्धर्वो विश्वावसुस्त्रिष्टुप् । आद्यतृचस्य सविता देवता । अन्त्यस्य विश्वावसुः ।

१३९ सूर्यरश्मिर्हरिकेशःपुरस्तात्सविताज्योतिरुदयाँअजस्रम् । तस्यपूषाप्रसवेयातिविद्वान्त्संपश्यन्विश्वाभुवनानिगोपाः १ नृचक्षाएषदिवोमध्यआस्तआपप्रिवान्रोदसीअन्तरिक्षम् । सविश्वाचीरभिचष्टेघृताचीरन्तरापूर्वमपरंचकेतुम् २ रायोबुध्नःसंगमनोवसूनांविश्वारूपाभिचष्टेशचीभिः । देवइवसवितासत्यधर्मेन्द्रोनतस्थौसमरेधनानाम् ३ विश्वावसुंसोमगन्धर्वमापोददृशुषीस्तदृतेनाव्यायन् । तदन्ववैदिन्द्रोरारहाणआसांपरिसूर्यस्यपरिधीँरपश्यत् ४ विश्वावसुरभितन्नोगृणातुदिव्योगन्धर्वोरजसोविमानः । यद्वाघासत्यमुतयन्नविद्मधियोहि-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

न्वानोधियुइन्नौअव्याः ५ सस्निमविन्दुच्चरणेनुदीनामपावृणोदुरोअश्मंव्रजाना-
म् । प्रासांगन्धर्वोअमृतानिवोचदिन्द्रोदक्षंपरिजानादहीनाम् ६ ॥ २७ ॥

अग्ने तव षडग्निः पावकोग्निः । आद्या विष्टारपङ्क्तिः । उपान्त्योपरिष्टाज्ज्योतिः ।

अन्त्यात्रिष्टुप् । शिष्टाः सतोबृहत्यः ।

१४० अग्नेतवश्रवोवयोमहिभ्राजन्तेअर्चयोविभावसो । बृहद्भानोशवसावा-
जमुक्थ्यं१दधासिदाशुषेकवे १ पावकवर्चाःशुक्रवर्चाअनूनवर्चाउदियर्षिभानु-
ना । पुत्रोमातराविचरन्नुपावसिपृणक्षिरोदसीउभे २ ऊर्जोनपाज्जातवेदःसुश-
स्तिभिर्मन्दस्वधीतिभिर्हितः । त्वेइषःसंदधुर्भूरिवर्पसश्चित्रोतयोवामजाताः ३
इरज्यन्नग्नेप्रथयस्वजन्तुभिरस्मेरायोअमर्त्य । सदर्शतस्यवपुषोविराजसिपृणक्षि
सानसिंक्रतुम् ४इष्कर्तारमध्वरस्यप्रचेतसंक्षयन्तंराधसोमहः । रातिंवामस्यसुभ-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

गांमहीमिषंदधांसिसानसिंरयिम् ५ ऋतावांनंमहिषंविश्वदर्शतमग्निंसुम्नायंदधिरेपुरोजनाः । श्रुत्कंर्णंसप्रथंस्तमंत्वागिरादैव्यंमानुषायुगा ६ ॥ २८ ॥

अग्ने अच्छ षडग्निस्तापसो विश्वेदेवा अनुष्टुप् ।

१४१ अग्नेअच्छावदेहनंःप्रत्यङ्ङःसुमनाभव । प्रनोंयच्छविशस्पतेधनदाअंसिनस्त्वम् १ प्रनोंयच्छत्वर्यमाप्रभगःप्रबृहस्पतिंः । प्रदेवाःप्रोतसूनृतांरायोदेवीदंदातुनः २ सोमंराजानमवंसेऽग्निंगीर्भिर्हवामहे । आदित्यान्विष्णुंसूर्यंब्रह्माणंचबृहस्पतिंम् ३ इन्द्रवायूबृहस्पतिंसुहवेहहंवामहे । यथांनःसर्वइज्जनःसंगंत्यांसुमनाअसंत् ४ अर्यमणंबृहस्पतिमिन्द्रंदानांयचोदय । वातंविष्णुंसरंस्वतींसवितारंचवाजिनंम् ५ त्वंनोंअग्नेअग्निभिर्ब्रह्मंयज्ञंचंवर्धय । त्वंनोंदेवतांतयेरायोदानांयचोदय ६ ॥ २९ ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अयमष्टौ शार्ङ्गाः ।प्रथमर्चस्य जरितार्षिः । उपाद्यस्य द्रोणः । उपान्त्यस्य सारिसृक्वः ।

अन्त्यस्य स्तम्बमित्रः । सर्वासामग्निर्देवता । आद्ये जगत्यौ । अन्त्ये अनुष्टुभौ । शिष्टास्त्रिष्टुभः ।

१४२ अयमग्नेजरितात्वेअभूदपिसहसःसूनोनह्य१न्यदस्त्याप्यम् । भद्रंहि
शर्मत्रिवरूथमस्तितआरेहिंसानामपदिद्युमाकृधि १ प्रवत्तेअग्नेजनिमापितूय-
तःसाचीवविश्वाभुवनान्यृञ्जसे । प्रसप्तयःप्रसनिषन्तनोधियःपुरश्चरन्तिपशुपाइव-
त्मना २ उतवाउपरिवृणक्षिबप्सद्बहोरग्नउलपस्यस्वधावः । उतखिल्याउर्व-
राणांभवन्तिमातेहेतिंतविषींचुक्रुधाम ३ यदुद्वतोनिवतोयासिबप्सत्पृथगेषिप्र-
गर्धिनीवसेना । यदातेवातोअनुवातिशोचिर्वप्तेवश्मश्रुवपसिप्रभूम ४ प्रत्यस्य
श्रेणयोददृश्रएकंनियानंबहवोरथासः । बाहूयदग्नेअनुमर्मृजानोन्यङ्ङुत्तानाम-
न्वेषिभूमिम् ५ उत्तेशुष्माजिहतामुत्तेअर्चिरुत्तेअग्नेशशमानस्यवाजाः । उच्छ्वं-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

श्वस्वनिनंमवर्धमानआत्वाद्यविश्वेवसंवःसदन्तु ६ अपामिदंन्ययंनंसमुद्रस्यंनि-
वेशनम् । अन्यंकृणुष्वेतःपन्थांतेनंयाहिवशाँअनुं ७ आयंनेतेपरायंणेदूर्वारोह-
न्तुपुष्पिणीः । ह्रदाश्वंपुण्डरींकाणिसमुद्रस्यंगृहाइमे ८ ॥ ३० ॥ इति शाकलर्क्-
संहितायामष्टमाष्टके सप्तमोध्यायः ॥ ८ ॥ ७ ॥

संषड्ढांख्योत्रिराश्विनमयंहिताक्ष्यपुत्रःसुपर्णोयामायनोवोर्ध्वकृशनोगायत्रीबृहतीगायत्र्यौसतौबृ-
हतीविष्टारपाङ्क्तिरिमामिन्द्राण्युपनिषत्सपत्नीबाधनमानुष्टुभंतुपङ्क्त्यन्तमरण्यान्यैरंमदोदेवमुनिररण्यानीं
तुष्टावश्रत्तेपञ्चसुवेदाःशैरीषिस्त्रिष्टुबन्तंसुष्वानासःपृथुर्वैन्यःसवितार्चन्हैरण्यस्तूपःसावित्रंसमिद्धोवासि-
ष्ठोमृळीकआग्नेयंवार्हतमन्त्येउपरिष्टाज्ज्योतिषीजगत्युपान्त्यावाश्रद्धयाश्रद्धाकामायिनीश्राद्धमानुष्टुभं
तुशासःशासोभारद्वाजईङ्क्षयन्तीर्देवजामयइन्द्रमातरोगायत्रंसोमोयमीभाववृत्तमानुष्टुभंत्वरायिशिरि-
म्बिठोभारद्वाजोलक्ष्मीघ्नंद्वितीयातृतीयाब्राह्मणस्पत्येअन्त्यावैश्वदेव्यग्निकेतुराग्नेयआग्नेयंगायत्रमिमानु
कंभुवनआप्त्यःसाधनोवाभौवनोवैश्वदेवंद्विपदंत्रैष्टुभंसूर्योनश्चक्षुःसौर्यःसौर्यंगायत्रमुदसौपद्पोलोमीश-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

च्यात्मानंतुष्टावानुष्टुभंतीव्रस्यपञ्चपूरणोवैश्वामित्रोमुञ्चामित्वाप्राजापत्योयक्ष्मनाशनोराजयक्ष्मघ्नम-
न्त्यानुष्टुब्ब्रह्मणाषड्ब्राह्मोरक्षोहागर्भसंस्रावेप्रायश्चित्तमानुष्टुभंह्यक्षीभ्यांविवृहाकाश्यपोयक्ष्मघ्नमपेहि
पञ्चप्रचेतादुःस्वप्नघ्नंपङ्क्त्यन्तंत्रिष्टुम्मध्येयंदेवानैर्ऋतःकपोतःकपोतौपहतौप्रायश्चित्तंवैश्वदेवमृषभमृषभोवै-
राजःशाक्वरोवासपत्नघ्नमानुष्टुभंमहापङ्क्त्यन्तंतुभ्येदंचतुष्कंविश्वामित्रजमदग्नीजागतंतृतीयालिङ्गोक्तदे-
वतावातस्यानिलोवातायनोवायव्यंमयोभूःशबरःकाक्षीवतोगव्यंविभ्राड्विभ्राट्सौर्यःसौर्यंजागतमा-
स्तारपङ्क्त्यन्तंत्वंत्यमिटतोभार्गवोगायत्रमायाहिसंवर्तउषस्यंद्वैपदमात्वाषड्ध्रुवोराज्ञःस्तुतिस्त्वानुष्टुभंत्व-
भीवर्तेनपञ्चाभीवर्तःप्रचश्चतुष्णमूर्ध्वग्रावासर्पोर्बुदिग्राव्णोस्तौद्गायत्रंप्रसूनवःसूनरार्भवआग्नेयमानुष्टुभं
द्वितीयागायत्र्याद्यार्भवीपतङ्गंतृचंपतङ्गःप्राजापत्योमायाभेदंजगत्यादित्यमूष्वरिष्टनेमिस्तार्क्ष्यस्तार्क्ष्यर्मु-
त्तिष्ठतैकर्चाःशिविरौशीनरःकाशिराजःप्रतर्दनोरोहिदश्वोवसुमनाआद्यानुष्टुप्प्रससाहिषेजयऐन्द्रःप्रथ-
मश्चैकर्चाःप्रथोवासिष्ठःसप्रथोभारद्वाजोघर्मःसौर्योवैश्वदेवंबृहस्पतिस्तपुर्मूर्धाबार्हस्पत्योबार्हस्पत्यमपश्यं
प्रजावान्प्राजापत्योन्वृचंयजमानपत्नीहोत्राशिषोविष्णुस्त्वष्टागर्भकर्ताविष्णुर्वाप्राजापत्योगर्भार्थाशी-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

लिङ्गोक्तदैवतमानुष्टुभंमहिसत्यधृतिर्वारुणिरादित्यंस्वस्त्ययनंगायत्रंवैवातोवातायनउलोवायव्यंमाग्नये पञ्चाग्नेयोवत्सआग्नेयंतुप्रनूयंतृचमाग्नेयःश्येनोजातवेदस्यमायंगौःसार्पराज्ञ्यात्मदैवतंसौर्यंवऋतंचमाधुच्छन्दसोघमर्षणोभाववृत्तमानुष्टुभंतुसंसंचतुष्कंसंवननःसंज्ञानमाद्याग्नेयीतृतीयात्रिष्टुप्तृतीयात्रिष्टुप् । तदेतत्सूक्तसहस्रंससप्तदशकंसपादाधिकमृग्वेदेपारायणपाठेशाकल्येशैशिरीयकेनमःशौनकायनमःशौनकाय ।

त्यं षड्त्रिः सांख्योश्विनावनुष्टुप् ।

१४३ ओम् त्यंचिदत्रिंमृतजुरमर्थमश्वंनयातवे । कक्षीवन्तंयदीपुनारथंनकृणुथोनवंम् १ त्यंचिदश्वंनवाजिनंमरेणवोयमत्नत । दृळ्हंग्रन्थिनविष्यंतमत्रिंयविंष्ठवारजंः २ नरादंसिष्ठावत्रंयेशुभ्रासिषांसतंधियः । अथाहिवांदिवोनरापुनःस्तोमोनविशसे ३ चितेतद्वांसुराधसारातिःसुमतिरश्विना । आयंन्नःसदनेपृथौसमंनेपर्षथोनरा ४ युवंभुज्युंसंमुद्रआरजंसःपारईङ्खितम् । यातमच्छांप-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तन्निभिर्नासत्यासातयेकृतम् ५ आवांसुम्नैःशंयूइववमंहिष्ठाविश्ववेदसा । सम-
स्मेभूषतंनरोत्संनपिप्युषीरिषः ६ ॥ १ ॥

अयं हि षड्पर्णस्तार्क्ष्यपुत्र ऊर्ध्वकृशनो वा यामायन इन्द्रो गायत्री । उपाद्या
बृहती । उपान्त्या सतोबृहती । अन्त्या विष्टारपङ्क्तिः ।

१४४ अयंहितेअमर्त्यइन्दुरत्योनपत्यते । दक्षोविश्वायुर्वेधसे १ अयमस्मा-
सुकाव्यऋभुर्वज्रोदास्वते । अयंबिभर्त्यूर्ध्वकृशनंमदमृभुर्नकृत्व्यंमदम् २ घृषुः
श्येनायकृत्वनआसुस्वासुवंसगः । अवंदीधेदहीशुवः ३ यंसुपर्णःपरावतःश्येन-
स्यपुत्रआभरत् । शतचक्रंयो३ह्योवर्तनिः ४ यंतेश्येनश्चारुमवृकंपपाभरदरुणं
मानमन्धसः । एनावयोवितार्यायुर्जीवसएनाजागारबन्धुता ५ एवातदिन्द्रइ-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

न्दुंनादेवेषुंचिद्धारयातेमहित्यजः । ऋत्वावयोविताार्युःसुकृतोकृत्वायमस्म-
दासुतः ६ ॥ २ ॥

इमां षडिन्द्राण्युपनिषत्सपत्नीबाधनमनुष्टुप् । अन्त्या पङ्क्तिः ।

१४५ इमांखनाम्योषंधिंवीरुधंबलंवत्तमाम् । ययांसपत्नींबाधंतेययांसंविन्द-
तेपतिंम् १ उत्तांनपर्णेसुभंगेदेवंजूतेसहंस्वति । सपत्नींमेपराधमपतिंमेकेवंलंकुरु २
उत्तंराहमुत्तरउत्तरेदुत्तंराभ्यः । अधांसपत्नीयाममाधंरासाधंराभ्यः ३ नह्यंस्या
नामंगृभ्णामिनोअस्मिन्रंमतेजनें । परांमेवपंरावतंसपत्नींगमयामसि ४ अह-
मंस्मिसहंमानाथत्वमंसिसासहिः । उभेसहंस्वतीभूत्वीसपत्नींमेसहावहै ५ उपं
तेऽधांसहंमानामभित्वांधांसहींयसा । मामनुप्रतेमनोंवत्संगौरिंवधावतुपथावा-
रिंवधावतु ६ ॥ ३ ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आरण्यानि षड्देवमुनिरैरम्मदोरण्यान्यनुष्टुप् ।

१४६ अरंण्यान्यरंण्यान्यसौयाप्रेवनश्यंसि । कुथाग्रामंनपृंच्छसिनत्वाभीरिं-वविन्दतीइँ १ वृषारवायवदंतेयदुपावंतिचिच्चिकः ।आघाटिभिंरिवधावयंन्नरण्या-निर्मंहीयते २ उतगावंइवादन्त्युतवेश्मेंवहृश्यते । उतोअरंण्यानिःसायंशंकटीरिं-वसर्जति ३ गामङ्गैषआह्वयतिदार्वङ्गैषोअपावधीत् । वसंन्नरण्यान्यांसायमक्रुक्ष-दितिंमन्यते ४ नवाअरंण्यानिर्हन्त्यन्यश्चेन्नाभिगच्छंति । स्वादोःफलंस्यजग्ध्वा-यंयथाकामंनिपंद्यते ५ आञ्जंनगन्धिंसुरभिंबंहृन्नामकृंषीवलाम् । प्राहंमृगाणा-मातरंमरण्यानिमंशंसिषम् ६ ॥ ४ ॥

श्रते पञ्च सुवेदाः शैरीषिरिन्द्रो जगती । अन्त्या त्रिष्टुप् ।

१४७श्रत्तेदधामिप्रथमायंमन्यवेऽहन्यद्वृत्रंनर्यंविवेरपः। उभेयत्वाभवंतोरोदं-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सीअनुरेजंतेशुष्मात्पृथिवीचिंदद्रिवः १ त्वंमायाभिरनवद्यमायिनंश्रवस्यतामनंसावृत्रमर्दयः । त्वामिन्नरोवृणतेगविष्टिषुत्वांविश्वासुहव्यास्विष्टिषु २ ऐषुंचाकन्धिपुरुहूतसूरिषुवृधासोयेमघवन्नानशुर्मघम् । अर्चन्तितोकेतनयेपरिष्टिषुमेधसांतावाजिनमह्वयेधने ३ सइन्नुरायःसुभृतस्यचाकनन्मदंयोअस्यरंह्यंचिकेतति । त्वावृधोमघवन्दाश्वंध्वरोमक्षूसवाजंभरतेधनानृभिः ४ त्वंशर्धायमहिनागृणानउरुकृधिमघवञ्छग्धिरायः । त्वंनोमित्रोवरुणोनमायीपित्वोनदस्मदयसेविभक्ता ५ ॥ ५ ॥

सुष्वाणासः पञ्च पृथुर्वैन्य इन्द्रस्त्रिष्टुप् ।

१४८ सुष्वाणासइन्द्रस्तुमसित्वाससवांसश्चतुविनृम्णवाजम् । आनोभरसुवितंयस्यचाकन्त्मनातनासनुयामत्वोताः १ ऋष्वस्त्वमिन्द्रशूरजातोदासीर्विं



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ग्नः सूर्येण सह्याः । गुहा हितं गुह्यं गूळ्हमप्सु बिभृमसि प्रस्रवणेन सोमम् २ अर्यो वा गिरो अभ्यर्च विद्वानृषीणां विप्रः सुमतिं चकानः । ते स्याम ये रणयन्त सोमैरेनोत तुभ्यं रथोळ्ह भक्षैः ३ इमा ब्रह्मेन्द्र तुभ्यं शंसि दा नृभ्यो नृणां शूर शवः । तेभिर्भव सक्रतुर्येषु चाकन्नुत त्रायस्व गृणत उत स्तीन् ४ श्रुधी हवमिन्द्र शूर पृथ्या उत स्तवसे वेन्यस्यार्कैः । आ यस्ते योनिं घृतवन्तमस्वारूर्मिर्न निम्नैर्द्रवयन्त वक्वाः ५ ॥ ६ ॥

सविता पञ्चार्चं हैरण्यस्तूपः सविता त्रिष्टुप् ।

१४९ सविता यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामदृंहत् । अश्वमिवाधुक्षद्धुनिमन्तरिक्षमतूर्ते बद्धं सविता समुद्रम् १ यत्रा समुद्रः स्कभितो व्यौनदपां नपात्सविता तस्य वेद । अतो भूरत आ उत्थितं रजोऽतो द्यावापृथिवी अप्रथेताम् २ पश्चेदमन्यदभवद्यजत्रममर्त्यस्य भुवनस्य भूना । सुपर्णो अङ्ग सवितुर्गरुत्मान्पूर्वो

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सीअनुरेजंतेशुष्मात्पृथिवीचिंदद्रिवः १ त्वंमायाभिंरनवद्यमायिनंश्रवस्यताम-
नंसावृत्रमंर्दयः । त्वामिन्नरौवृणतेगविंष्टिषुत्वांविश्वांसुहव्यांस्विष्टिषु २ ऐषुंचा-
कन्धिपुरुहूतसूरिषुंवृधासोयेमंघवन्नानशुर्मघम् । अर्चन्तितोकेतनंयेपरिंष्टिषुमे-
धसांतावाजिनमह्नयेधनें ३ सइन्नुरायःसुभृतस्यचाकनन्मदंयोअंस्यरंह्यंचिकेत-
ति । त्वावृंधोमघवन्दाश्वंध्वरोमक्षूसवाजंभरतेधनानृभिः ४ त्वंशर्धायमहिना
गृणानउरुकृंधिमघवञ्छग्धिरायः । त्वंनोमित्रोवरुणोनमायीपित्वोनदंस्मदयसे-
विभक्ता ५ ॥ ५ ॥

सुष्वाणासः पञ्च पृथुर्वैन्य इन्द्रस्त्रिष्टुप् ।

१४८ सुष्वाणासंइन्द्रस्तुमसित्वाससवांसंश्चतुविनृम्णवाजम् । आनोभर
सुवितंयस्यंचाकन्त्मनातनांसनुयामत्वोताः १ ऋष्वस्त्वमिन्द्रशूरजातोदासीर्वि



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ग्रःसूर्येणसह्याः । गुहाहितंगुह्यंगूळ्हमप्सुबिभृमसिप्रस्रवणेनसोमम् २ अर्योवा गिरोअभ्यर्चविद्वानृषीणांविप्रःसुमतिंचकानः । तेस्यामयेरणयन्तसोमैरेनोततुभ्यंरथोळ्हभक्षैः ३ इमाब्रह्मेन्द्रतुभ्यंशंसिदानृभ्योनृणांशूरशवः । तेभिर्भवसक्रतुर्येषुचाकन्नुतत्रायस्वगृणतउतस्तीन् ४ श्रुधीहवमिन्द्रशूरपृथ्याउतस्तवसेवेन्यस्यार्कैः । आयस्तेयोनिंघृतवन्तमस्वारूर्मिर्ननिम्नैर्द्रवयन्तवक्वाः ५ ॥ ६ ॥

सविता पञ्चार्चन्हैरण्यस्तूपः सविता त्रिष्टुप् ।

१४९ सवितायन्त्रैःपृथिवीमरम्णादस्कम्भनेसविताद्यामदृंहत् । अश्वमिवाधुक्षद्धुनिमन्तरिक्षमतूर्तेबद्धंसवितासमुद्रम् १ यत्रासमुद्रःस्कभितोव्यौनदपांनपात्सवितातस्यवेद । अतोभूरतआउत्थितंरजोऽतोद्यावापृथिवीअप्रथेताम् २ पश्चेदमन्यदभवद्यजत्रममर्त्यस्यभुवनस्यभूना । सुपर्णोअङ्गसवितुर्गरुत्मान्पूर्वो

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

जातःसउँअस्यानुधर्मं ३ गावइवग्राममंयूयुधिरिवाश्वान्वाश्रेववत्संसुमनादुहा-
ना । पतिरिवजायामभिनोन्येतुधर्तादिवःसविताविश्ववारः ४ हिरण्यस्तूपःस-
वितर्यथात्वाङ्गिरसोजुह्वेवाजेअस्मिन् । एवात्वार्चन्नवसेवन्दमानःसोमस्येवांशुं
प्रतिजागराहम् ५ ॥ ७ ॥

समिद्धः पञ्च मृळीको वासिष्ठोग्निर्बृहती । उपान्त्योपरिष्टाज्ज्योतिर्जगती वा ।
अन्त्योपरिष्टाज्ज्योतिः ।

१५० समिद्धश्चित्समिध्यसेदेवेभ्योहव्यवाहन । आदित्यैरुद्रैर्वसुभिर्नआग-
हिमृळीकायनआगहि १ इमंयज्ञमिदंवचोजुजुषाणउपागहि । मर्तासस्त्वास-
मिधानहवामहेमृळीकायहवामहे २ त्वामुजातवेदसंविश्ववारंगृणेधिया । अग्ने
देवाँआवहनःप्रियव्रतान्मृळीकायप्रियव्रतान् ३ अग्निर्देवोदेवानामभवत्पुरोहि-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तोऽग्निंमनुष्या३ऋषयःसमीधिरे । अग्निंमहोधनसातावहंहुवेमृळीकंधनसात-
ये ४ अग्निरत्रिंभरद्वाजंगविष्ठिरंप्रावन्नःकण्वंत्रसदस्युमाहवे । अग्निंवसिष्ठोहवते
पुरोहितोमृळीकायपुरोहितः ५ ॥ ८ ॥

श्रद्धया पञ्च श्रद्धा कामायनी श्रद्धानुष्टुप् ।

१५१ श्रद्धयाग्निःसमिध्यतेश्रद्धयाहूयतेहविः । श्रद्धांभगस्यमूर्धनिवचसावे-
दयामसि १ प्रियंश्रद्धेददतःप्रियंश्रद्धेदिदासतः । प्रियंभोजेषुयज्वस्विदंमउदितं
कृधि २ यथादेवाअसुरेषुश्रद्धामुग्रेषुचक्रिरे । एवंभोजेषुयज्वस्वस्माकमुदितंकृ-
धि ३ श्रद्धांदेवायजमानावायुगोपाउपासते । श्रद्धांहृदय्यं१याकूत्याश्रद्धयाविं-
न्दतेवसु ४ श्रद्धांप्रातर्हवामहेश्रद्धांमध्यंदिनंपरि । श्रद्धांसूर्यस्यनिम्रुचिश्रद्धेश्र-
द्धापयेहनः ५॥९॥ इति शाकलर्क्संहितायां दशमे मण्डले एकादशोनुवाकः॥१०॥११॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शासः पञ्च शासो भरद्वाज इन्द्रोनुष्टुप् ।

१५२ शासइत्थामहाँअस्यमित्रखादोअद्भुतः । नयस्यंहन्यतेसखानजीयंते-कदाचन १ स्वस्तिदाविशस्पतिर्वृत्रहाविमृधोवशी । वृषेन्द्रःपुरएतुनःसोमपा अंभयङ्करः २ विरक्षोविमृधोजहिविवृत्रस्यहनूरुज । विमन्युमिन्द्रवृत्रहन्नमित्रं-स्याभिदासंतः ३ विनंइन्द्रमृधोजहिनीचायंच्छपृतन्यतः । योअस्माँअंभिदास-त्यधरंगमयातमः ४ अपेन्द्रद्विषतोमनोऽपजिज्यांसतोवधम् । विमन्योःशर्मंय-च्छवरीयोयवयावधम् ५ ॥ १० ॥

ईङ्खयन्तीः पञ्चेन्द्रमातरो देवजानय इन्द्रो गायत्री ।

१५३ ईङ्खयंन्तीरपस्युवइन्द्रंजातमुपासते । भेजानासःसुवीर्यम् १ त्वमिन्द्र बलादधिसहसोजातओजसः । त्वंवृषन्वृषेदसि २ त्वमिन्द्रासिवृत्रहाव्यं१न्तरि-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्षमतिरः। उद्दयामंस्तभ्नाओजंसा ३ त्वमिंन्द्रसजोषसमर्कंबिंभर्षिंबाह्वोः। वज्रंशिशांनओजंसा ४ त्वमिंन्द्राभिभूरंसिविश्वांजातान्योजंसा । सविश्वाभुव आभंवः ५ ॥ ११ ॥

सोमः पञ्च यमी भाववृत्तमनुष्टुप्।

१५४ सोमएकेभ्यःपवतेघृतमेकउपांसते । येभ्योमधुंप्रधावंतितांश्चिंदेवापिंगच्छतात् १ तपंसायेअंनाधृष्यास्तपंसायेस्वंर्ययुः। तपोयेचंक्रिरेमहस्तांश्चिंदेवापिंगच्छतात् २ येयुध्यंन्तेप्रधनेषुशूरांसोयेतंनूत्यजंः। येवांसहस्रंदक्षिणास्तांश्चिंदेवापिंगच्छतात् ३ येचित्पूर्वंऋतसापंऋतावांनऋतावृधंः । पितृन्तपंस्वतोयमतांश्चिंदेवापिंगच्छतात् ४ सहस्रंणीथाःकवयोयेगोंपायन्तिसूर्यम्। ऋषीन्तपंस्वतोयमतपोजाँअपिंगच्छतात् ५ ॥ १२ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अरायि पञ्च शिरिम्बिठो भारद्वाजोऽनुष्टुप्। आद्योपान्त्ययोरलक्ष्मीनाशकोर्थो देवता। अन्त्याया विश्वेदेवाः। शिष्टयोर्ब्रह्मणस्पतिः।

१५५ अरायिकाणेविकटेगिरिंगच्छसदान्वे। शिरिम्बिठस्यसत्वभिस्तेभिष्ट्वाचातयामसि १ चत्तोइतश्चत्तामुतःसर्वाभ्रूणान्यारुषी। अरायंब्रह्मणस्पतेतीक्ष्णशृङ्गोदृषन्निहि २ अदोयद्दारुप्लवतेसिन्धोःपारेअपूरुषम्। तदारभस्वदुर्हणोतेनगच्छपरस्तरम् ३ यद्धप्राचीरजगन्तोरोमण्डूरधाणिकीः। हताइन्द्रस्यशत्रवःसर्वेबुद्बुदयाशवः ४ परीमेगामनेषतपर्यग्निमहृषत। देवेष्वक्रतश्रवःकइमाँआदधर्षति ५ ॥ १३ ॥

अग्निं पञ्च केतुराग्नेयोग्निर्गायत्री।

१५६ अग्निंहिन्वन्तुनोधियःसप्तिमाशुमिवाजिषु। तेनजेष्मधनंधनम् १



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

य॒या॒गा आ॒करा॑महे॒सेनं॑याग्ने॒तवो॒त्या । तां नो॑हिन्व म॒घत्त॑ये २ आग्ने॑स्थू॒रं र॒यिं भ॑र पृ॒थुं गोम॑न्तम॒श्विन॑म् । अ॒ङ्धि खं व॒र्तया॑ प॒णिम् ३ अग्ने॒ नक्ष॑त्रम॒जर॒मा सूर्यं॑रोहयो दि॒वि । दध॒ज्ज्योति॒र्जने॑भ्यः ४ अग्ने॑ के॒तुर्वि॒शाम॑सि॒ प्रेष्ठः॒ श्रेष्ठ॑ उपस्थ॒सत् । बोधा॑ स्तो॒त्रे वयो॒ दध॑त् ५ ॥ १४ ॥

इमा नु कं पञ्च भुवन आप्त्यः साधनो वा भौवनो विश्वेदेवा द्विपदा त्रिष्टुप् ।

१५७ इ॒मा नु कं॒ भुव॑ना सीषधा॒मेन्द्र॑श्च॒ विश्वे॑ च दे॒वाः १ य॒ज्ञं च॑ नस्त॒न्वं॑ च प्र॒जां चा॑दि॒त्यैरिन्द्रः॑ स॒ह ची॑कॢपाति २ आ॒दि॒त्यैरिन्द्रः॒ सग॑णो म॒रुद्भि॑र॒स्माकं॑ भूत्ववि॒ता त॒नूना॑म् ३ ह॒त्वाय॑ दे॒वा असु॑रा॒न्यदाय॑न्दे॒वा दे॑व॒त्वम॑भि॒रक्ष॑माणाः ४ प्र॒त्यञ्च॑म॒र्कम॑नय॒ञ्छची॑भि॒रादित्स्व॒धामि॑षि॒रां पर्य॑पश्यन् ५ ॥ १५ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सूर्यो नः पञ्च सौर्यचक्षुः सूर्योगायत्री ।

१५८ सूर्योनोदिवस्पांतुवातोअन्तरिक्षात् । अग्निर्नःपार्थिवेभ्यः १ जोषांसवितुर्यस्यंतेहरंःशतंसवाँअर्हति । पाहिनोदिद्युतःपतंन्त्याः २ चक्षुर्नोदेवःसंविताचक्षुर्नउतपर्वतः । चक्षुर्धातादंधातुनः ३ चक्षुर्नोधेहिचक्षुंषेचक्षुर्विख्यैतनूभ्यः । संचेदंविचंपश्येम ४ सुसंदृशंत्वावयंप्रतिंपश्येमसूर्य । विपंश्येमनृचक्षंसः ५ ॥ १६ ॥

उदसौ षट् शची पौलोमी शची पौलोम्यनुष्टुप् ।

१५९ उदसौसूर्योअगादुदयंमांमकोभगंः । अहंतद्विद्वलापतिंमभ्यंसाक्षिविषासहिः १ अहंकेतुरहंमूर्धाहमुग्राविवाचंनी । ममेदनुक्रतुंपतिःसेहानायाउपाचंरेत् २ ममंपुत्राःशंत्रुहणोऽथोमेदुहितांविराट् । उताहमंस्मिसंजयादत्यौमे



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

श्लोकंउत्तमः ३ येनेन्द्रोहविषाकृत्व्यभवद्द्युम्न्युत्तमः । इदंतदक्रिदेवाअसपत्नाकि-
लाभुवम् ४ असपत्नासपत्नघ्नीजयन्त्यभिभूवरी । आवृक्षमन्यासांवर्चोराधो
अस्थेयसामिव ५ सममजैषमिमाअहंसपत्नीरभिभूवरी । यथाहमस्यवीरस्यवि-
राजंनिजनस्यच ॥ ६ ॥ १७ ॥

तीव्रस्य पञ्च पूरणो वैश्वामित्र इन्द्रस्त्रिष्टुप् ।

१६० तीव्रस्याभिवयसोअस्यपाहिसर्वरथाविहरीइहमुंञ्च । इन्द्रमात्वायज-
मानासोअन्येनिरीरमन्तुभ्यमिमेसुतासः १ तुभ्यंसुतास्तुभ्यमुसोत्वासस्त्वां
गिरःश्वात्र्याआह्वयन्ति । इन्द्रेदमद्यसवनंजुषाणोविश्वस्यविद्वाँइहपाहिसोमम् २
यउशताममनसासोममस्मैसर्वहृदादेवकामःसुनोति । नगाइन्द्रस्तस्यपरादाति
प्रशस्तमिच्चारुमस्मैकृणोति ३ अनुस्पष्टोभवत्येषोअस्ययोअस्मैरेवान्नसुनोति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सोमम् । निरंरत्नौमंघवातंदंधातिब्रह्मद्विषोहन्त्यनानुदिष्टः ४ अश्वायन्तोगव्यन्तोवाजयंन्तोहवामहेत्वोपंगन्तवाउं । आभूषंन्तस्तेसुमतौनवायांवयमिंन्द्रत्वाशुनंहुवेम ५ ॥ १८ ॥

मुञ्चामि त्वा पञ्च यक्ष्मनाशनः प्राजापत्यो राजयक्ष्मघ्नं त्रिष्टुप् । अन्त्यानुष्टुप् ।

१६१ मुञ्चामिंत्वाहविषाजीवंनायकमंज्ञातयक्ष्मादुतराजयक्ष्मात् । ग्राहिंर्जग्राहयदिवैतदेनंतस्याइन्द्राग्नीप्रमुंमुक्तमेनम् १ यदिंक्षितायुर्यदिंवापरेंतोयदिंमृत्योरंन्तिकंनीतएव । तमाहंरामिनिर्ऋतेरुपस्थादस्पार्षमेनंशतशांरदाय २ सहस्राक्षेणंशतशांरदेनशतायुंषाहविषाहार्षमेनम् । शतंयथेमंशरदोनयातीन्द्रोविश्वंस्यदुरितस्यपारम् ३ शतंजीवशरदोवर्धमानःशतंहेमन्ताञ्छतमुंवसन्ता-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

न् । शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ४ आहार्षं त्वाविदं त्वा पुनरागाः पुनर्नव । सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च तेऽविदम् ५ ॥ १९ ॥

ब्रह्मणा षड्रक्षोह ब्राह्मो गर्भसंस्रावे प्रायश्चित्तमनुष्टुप् ।

१६२ ब्रह्मणाग्निः संविदानो रक्षोहा बाधतामितः । अमीवा यस्ते गर्भं दुर्णामा योनिमाशये १ यस्ते गर्भममीवा दुर्णामा योनिमाशये । अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत् २ यस्ते हन्ति पतयन्तं निषत्स्नुं यः सरीसृपम् । जातं यस्ते जिघांसति तमितो नाशयामसि ३ यस्त ऊरू विहरत्यन्तरा दम्पती शये । योनिं यो अन्तरारेळ्हि तमितो नाशयामसि ४ यस्त्वा भ्राता पतिर्भूत्वा जारो भूत्वा निपद्यते । प्रजां यस्ते जिघांसति तमितो नाशयामसि ५ यस्त्वा स्वप्नेन तमसा मोहयित्वा निपद्यते । प्रजां यस्ते जिघांसति तमितो नाशयामसि ६ ॥ २० ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अक्षीभ्यां षड्विवृहा काश्यपो यक्ष्मघ्न्यनुष्टुप् ।

१६३ अक्षीभ्यांतेनासिकाभ्यांकर्णाभ्यांछुबुंकादधि । यक्ष्मंशीर्षण्यंमस्तिष्का-
ज्जिह्वायाविवृहामिते १ ग्रीवाभ्यस्तउष्णिहाभ्यःकीकसाभ्योअनूक्यात् । य-
क्ष्मंदोषण्यं१मंसाभ्यांबाहुभ्यांविवृहामिते २ आन्त्रेभ्यस्तेगुदाभ्योवनिष्ठोर्हृ-
दयादधि । यक्ष्मंमतस्नाभ्यांयक्नः प्लाशिभ्योविवृहामिते ३ ऊरुभ्यांतेअष्ठीव-
द्भ्यांपार्ष्णिभ्यांप्रपदाभ्याम् । यक्ष्मंश्रोणिभ्यांभासदाद्भंससोविवृहामिते ४
मेहनाद्वनंकरणाल्लोमभ्यस्तेनखेभ्यः । यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामि-
ते ५ अङ्गादङ्गाल्लोम्नोलोम्नोजातंपर्वणिपर्वणि । यक्ष्मंसर्वस्मादात्मनस्तमिदं
विवृहामिते ६ ॥ २१ ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अपेहि पञ्च दुःस्वप्नघ्न्यनुष्टुप् । तृतीया त्रिष्टुप् । अन्त्या पाङ्क्तिः ।

१६४ अपे॑हि मनसस्पते॒ऽप॑क्राम प॒रश्च॑र । प॒रो निरृ॑त्या॒ आ च॑क्ष्व बहु॒धा जीव॑तो॒ मनः॑ १ भ॒द्रं वै वरं॑ वृणते भ॒द्रं यु॑ञ्जन्ति॒ दक्षि॑णम् । भ॒द्रं वै॑वस्व॒ते चक्षु॑र्बहु॒त्रा जीव॑तो॒ मनः॑ २ यदा॒शसा॑ नि॒ःशसा॑भि॒शसो॑पारि॒म जाग्र॑तो॒ यत्स्व॒पन्तः॑ । अ॒ग्निर्विश्वा॒न्यप॑ दुष्कृ॒तान्यजु॑ष्टान्या॒रे अ॒स्मद्द॑धातु ३ यदि॑न्द्र ब्रह्मणस्पते॒ऽभिद्रो॒हं चरा॑मसि । प्रचे॑ता न आङ्गिर॒सो द्वि॑ष॒तां पा॒त्वंह॑सः ४ अजै॑ष्मा॒द्यास॑नाम॒ चाभू॒मानां॑गसो व॒यम् । जा॒ग्र॒त्स्व॒प्नः सं॑क॒ल्पः पा॒पो यं द्वि॒ष्मस्तं स ऋ॑च्छतु॒ यो नो॒ द्वेष्टि॒ तमृ॑च्छतु ५ ॥ २२ ॥

देवाः पञ्च कपोतो नैर्ऋतः कपोतोपहतौ प्रायश्चित्तं विश्वेदेवास्त्रिष्टुप् ।

१६५ देवाः॑ क॒पोत॑ इषि॒तो यदि॒च्छन्दू॒तो निरृ॑त्या इ॒दमा॑ ज॒गाम॑ । तस्मा॑ अर्चाम कृ॒णवा॑म॒ निष्कृ॑तिं॒ शं नो॑ अस्तु द्वि॒पदे॒ शं चतु॑ष्पदे १ शि॒वः क॒पोत॑ इषि॒तो नो॑ अस्त्वना॒-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

 



गादेवाःशकुनोगृहेषु । अग्निर्हिविप्रोजुषतांहविर्नःपरिहेतिःपक्षिणीनोवृणक्तु २ हेतिःपक्षिणीनदभात्यस्मानाष्ट्रीपदंकृणुतेअग्निधाने । शंनोगोभ्यश्चपुरुषेभ्यश्चास्तुमानोहिंसीदिहदेवाःकपोतः ३ यदुलूकोवदतिमोघमेतद्यत्कपोतःपदमग्नौकृणोति । यस्यदूतःप्रहितएषएतत्तस्मैयमायनमोअस्तुमृत्यवे ४ ऋचाकपोतंनुदतप्रणोदमिषंमदन्तःपरिगांनयध्वम् । संयोपयन्तोदुरितानिविश्वाहित्वानऊर्जंप्रपतात्पतिष्ठः ५ ॥ २३ ॥

ऋषभं पञ्च ऋषभो वैराजः शाकरो वा सपत्नघ्न्यनुष्टुप् । अन्त्या महापङ्क्तिः ।

१६६ ऋषभंमासमानानांसपत्नानांविषासहिम् । हन्तारंशत्रूणांकृधिविराजंगोपतिंगवाम् १ अहमस्मिसपत्नहेन्द्रइवारिष्टोअक्षतः । अधःसपत्नामेपदोरिमेसर्वेअभिष्ठिताः २ अत्रैववोऽपिनह्याम्युभेआर्त्नीइवज्यया । वाचस्पतेनि



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

बैधेमान्यथामदधंरंवदान् ३ अभिभूरहमागंमंविश्वकंर्मेणधाम्ना । आवंश्चित्तमा वोंव्रतमावोऽहंसमिंतिंददे ४ योगक्षेमंवंआदायाहंभूंयासमुत्तमआवोंमूर्धानंमक्र- मीम् । अधस्पदान्मउद्वंदतमण्डूकाइवोदकान्मण्डूकाउदकादिंव ५ ॥ २४ ॥

तुभ्येदं चतुष्कं विश्वामित्रजमदग्नी इन्द्रो जगती । उपान्साया लिङ्गोक्तदेवता ।

१६७ तुभ्येदमिंन्द्रपरिंषिच्यतेमधुत्वंसुतस्यंकलशंस्यराजासि । त्वंरयिंपुरु- वीरामुनस्कृधित्वंतपंःपरितप्यांजयःस्वंः १ स्वर्जितंमहिंमन्दानमन्धंसोहवांम- हेपरिंशक्रंसुताँउपं । इमंनोयज्ञमिहबोध्यागंहिस्पृधोजयंन्तंमघवांनमीमहे २ सोमंस्यराज्ञोवरुणस्यधमंणिबृहस्पतेरनुंयत्याउशमंणि । तवाहमद्यमंघवन्नुपं- स्तुतौधातर्विधांतःकलशाँअभक्षयम् ३ प्रसूंतोभक्षमंकरंचरावपिस्तोमंचेमंप्रंथ- मःसूरिरुन्मृंजे । सुतेसातेनयद्यागंमंवांप्रतिंविश्वामित्रजमदग्नीदमें ४ ॥ २५ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वातस्य चतुष्कमनिलो वातायनो वायुस्त्रिष्टुप्।

१६८ वातस्यनुमहिमानंरथस्यरुजन्नेतिस्तनयन्नस्यघोषः। दिविस्पृग्यात्यरुणानिकृण्वन्नुतोएतिपृथिव्यारेणुमस्यन् १ संप्रेरतेअनुवातस्यविष्ठाऐनंगच्छन्तिसमनंनयोषाः। ताभिःसयुक्सरथंदेवईयतेऽस्यविश्वस्यभुवनस्यराजा २ अन्तरिक्षेपथिभिरीयमानोनानिविशतेकतमच्चनाहः। अपांसखाप्रथमजाऋतावाक्वस्विज्जातःकुतआबभूव ३ आत्मादेवानांभुवनस्यगर्भोयथावशंचरतिदेवएषः। घोषाइदस्यशृण्विरेनरूपंतस्मैवातायहविषाविधेम ४ ॥ २६ ॥

मयोभूश्चतुष्कं शबरः काक्षीवतो गावस्त्रिष्टुप्।

१६९ मयोभूर्वातोअभिवातूस्राऊर्जस्वतीरोषधीरारिशन्ताम्। पीवस्वतीर्जीवधन्याःपिबन्त्ववसायपद्वतेरुद्रमृळ १ याःसरूपाविरूपाएकरूपायासामग्नि-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रिष्ट्यानामानिवेदं । याअङ्गिरसुस्तपसेहचक्रुस्ताभ्यःपर्जन्यमहिशर्मयच्छ २
यादेवेषुतन्वं १मैरयन्तयासांसोमोविश्वारूपाणिवेदं । ताअस्मभ्यंपयसापिन्वं-
मानाःप्रजावंतीरिन्द्रगोष्ठेरिरीहि ३प्रजापतीर्मह्यमेताररांणोविश्वैर्देवैःपितृभिःसं-
विदानः । शिवाःसतीरुपनोगोष्ठमाकुस्तासांवयंप्रजयासंसदेम ४ ॥ २७ ॥

विभ्राड्वृतुष्कं विभ्राट्सौर्यः सूर्यो जगती । अन्त्याऽऽस्तारपङ्क्तिः

१७० विभ्राड्बृहत्पिंबतुसोम्यंमध्वायुर्दधंद्यज्ञपंतावविंह्रुतम् । वातंजूतोयो
अंभिरक्षंतित्मनांप्रजाःपुंपोषपुरुधाविराजति १ विभ्राड्बृहत्सुभृतंवाजसातमं
धर्मन्दिवोधरुणेसत्यमर्पितम् । अमित्रहावृत्रहादस्युहन्तंमंज्योतिर्जज्ञेअसुरहा
संपत्नहा २ इदंश्रेष्ठंज्योतिषांज्योतिरुत्तमंविश्वजिद्धनजिदुच्यतेबृहत् । विश्व-
भ्राड्भ्राजोमहिसूर्योदृशउरुपप्रथेसहओजोअच्युतम् ३ विभ्राजञ्ज्योतिषास्वं-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

१रगंच्छोरोचनंदिवः । येनेमाविश्वाभुवनान्याभृताविश्वकंर्मणाविश्वदेंव्याव-ता ४ ॥ २८ ॥

त्वं त्यं चतुष्कमिटो भार्गव इन्द्रो गायत्री ।

१७१ त्वंत्यमिटतोरथमिन्द्रप्रावंःसुतावंतः । अशृंणोःसोमिनोहवंम् १ त्वं-मखस्यदोधंतःशिरोऽवंत्वचोभंरः । अगंच्छःसोमिनोगृहम् २ त्वंत्यमिंन्द्रमर्त्यं-मास्त्रबुध्नायवेन्यम् । मुहुंःश्रथ्नामनस्यवें ३ त्वंत्यमिंन्द्रसूर्यंपश्चासन्तंपुरस्कृंधि । देवानांचित्तिरोवशंम् ४ ॥ २९ ॥

आ याहि चतुष्कं संवर्त उषा द्विपदा विराट् ।

१७२ आयांहिवनंसासहगावंःसचन्तवर्तनिंयदूधंभिः १ आयांहिवस्व्या-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

धियामंहिष्ठोजारयन्मंखःसुदानुंभिः २ पितुभृतोनतन्तुमित्सुदानंवःप्रतिंदध्मोय-
जामसि ३ उषाअपस्वसुस्तमःसंवर्तयतिवर्तनिंसुजाततां ४ ॥ ३० ॥

आ त्वा षड्ध्रुवो राज्ञः स्तुतिरनुष्टुप् ।

१७३ आत्वांहार्षमन्तरैंधिध्रुवस्तिष्ठाविंचाचलिः । विशांस्त्वासर्वांवाञ्छन्तु
मात्वद्राष्ट्रमधिंभ्रशत् १ इहैवैधिमापंच्योष्ठाःपर्वंतइवाविंचाचलिः । इन्द्रइवेह-
ध्रुवस्तिंष्ठेहराष्ट्रमुंधारय २ इममिन्द्रोंअदीधरद्ध्रुवंध्रुवेणंहविषां । तस्मैसोमो
अधिंब्रवत्तस्माउब्रह्मंणस्पतिंः ३ ध्रुवाद्यौर्ध्रुवापृथिवीध्रुवासःपर्वताइमे । ध्रुवंवि-
श्वमिदंजगंद्ध्रुवोराजाविशामयम् ४ ध्रुवंतेराजावरुंणोध्रुवंदेवोबृहस्पतिंः । ध्रुवं
तइन्द्रश्चाग्निश्चंराष्ट्रंधारयतांध्रुवम् ५ ध्रुवंध्रुवेणंहविषाभिसोमंमृशामसि । अथों
तइन्द्रःकेवलीर्विशोंबलिहृतंस्करत् ६ ॥ ३१ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अभीवर्तेन पञ्चाभीवर्तो राज्ञः स्तुतिरनुष्टुप्।

१७४ अभीवर्तेनहविषायेनेन्द्रोअभिवावृते । तेनास्मान्ब्रह्मणस्पतेऽभिराष्ट्रायंवर्तय १ अभिवृत्यंसपत्नानभियानोअरातयः । अभिपृतन्यन्तंतिष्ठाभियोनंइरस्यति २ अभित्वांदेवःसंविताभिसोमोअवीवृतत् । अभित्वाविश्वाभूतान्यंभीवर्तोयथासंसि ३ येनेन्द्रोहविषाकृत्व्यभवद्द्युम्न्युत्तमः । इदंतदक्रिदेवाअसपत्नःकिलाभुवम् ४ असपत्नःसंपत्नहाभिराष्ट्रोविषासहिः । यथाहमेषांभूतानांविराजानिजनंस्यच ५ ॥ ३२ ॥

प्र वश्चतुष्कमूर्ध्वग्रावार्बुदिर्ग्रावाणो गायत्री ।

१७५ प्रवोग्रावाणःसवितादेवःसुवतुधर्मणा । धूर्षुयुंज्यध्वंसुनुत १ ग्रावाणोअपदुच्छुनामपंसेधतदुर्मतिम् । उस्राःकर्तनभेषजम् २ ग्रावाणउपरेष्वामं-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

हीयन्तेसजोषसः । वृष्णेदधतोवृष्ण्यम् ३ ग्रावाणःसवितानुवोदेवःसुवतुधर्मणा । यजमानायसुन्वते ४ ॥ ३३ ॥

प्र सूनवश्चतुष्कं सूनुरार्भवोऽग्निरनुष्टुप् । आद्यायाः ऋभवः । उपाद्या गायत्री ।

१७६ प्रसूनवंऋभूणांबृहन्नवन्तवृजना । क्षामायेविश्वधायसोऽश्नन्धेनुंनमातरम् १ प्रदेवंदेव्याधियाभरताजातवेदसम् । हव्यानोवक्षदानुषक् २ अयमुष्यप्रदेवयुर्होतायज्ञायनीयते । रथोनयोरभीवृतोघृणीवाञ्चेततित्मना ३ अयमग्निरुरुष्यत्यमृतादिवजन्मनः । सहसश्चित्सहीयान्देवोजीवातवेकृतः ४ ॥ ३४ ॥

पतङ्गं त्र्यृचं पतङ्गः प्राजापत्यो मायाभेदस्त्रिष्टुप् । आद्या जगती ।

१७७ पतङ्गमक्तमसुरस्यमाययाहृदापश्यन्तिमनसाविपश्चितः । समुद्रेअन्तःकवयोविचक्षतेमरीचीनांपदमिच्छन्तिवेधसः १ पतङ्गोवाचंमनसाबिभर्तितांग-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

 

न्धर्वी ऽवदन्नर्भे अन्तः । तांद्योतमानांस्वर्यंमनीषामृतस्यपदेकवयोनिपान्ति २ अपश्यंगोपामनिपद्यमानमाचपराचपथिभिश्चरन्तम् । ससध्रीचीःसविषूचीर्वसानआवरीवर्तिभुवनेष्वन्तः ३ ॥ ३५ ॥

त्यमू षु तृचमरिष्टनेमिस्तार्क्ष्यस्त्रिष्टुप् ।

१७८ त्यमूषुवाजिनंदेवजूतंसहावानंतरुतारंरथानाम् । अरिष्टनेमिंपृतनाजंमाशुंस्वस्तयेतार्क्ष्यमिहाहुवेम १ इन्द्रस्येवरातिमाजोहुवानाःस्वस्तयेनावमिवारुहेम । उर्वीनपृथ्वीबहुलेगभीरेमावामेतौमापरेतौरिषाम २ सद्यश्चिद्यःशवसापञ्चकृष्टीःसूर्यइवज्योतिषापस्ततान । सहस्रसाःशतसाअस्यरंहिर्नस्मावरन्तेयुवतिंनशर्याम् ३ ॥ ३६ ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उत्तिष्ठत तृचमिन्द्रस्त्रिष्टुप् आद्यायाः शिबिरौशीनरः । मध्यायाः प्रतर्दनः काशिराजः । अन्त्यायाः वसुमना रौहिदश्वः । आद्यानुष्टुप् ।

१७९ उत्तिष्ठतावपश्यतेन्द्रस्य भागमृत्वियम् । यदि श्रातो जुहोतन यद्यश्रातो ममत्तन १ श्रातं हविरो ष्विन्द्र प्र याहि जगाम सूरो अध्वनो वि मध्यम् । परि त्वासते निधिभिः सखायः कुलपा न व्राजपतिं चरन्तम् २ श्रातं मन्य ऊधनि श्रातमग्नौ सुश्रातं मन्ये तदृतं नवीयः । माध्यंदिनस्य सवनस्य दध्नः पिबेन्द्र वज्रिन्पुरुकृज्जुषाणः ३ ॥ ३७ ॥

प्र ससाहिषे तृचं जय ऐन्द्र इन्द्रस्त्रिष्टुप् ।

१८० प्र ससाहिषे पुरुहूत शत्रूञ्ज्येष्ठस्ते शुष्म इह रातिरस्तु । इन्द्रा भर दक्षिणेना वसूनि पतिः सिन्धूनामसि रेवतीनाम् १ मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जग-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

गन्थापरस्याः । सूकंसंशायंपविमिन्द्रतिग्मंविशत्रून्ताह्वविमृधोनुदस्व २ इन्द्रं क्षत्रमभिवाममोजोऽजांयथावृषभचर्षणिनाम् । अपानुदोजनममित्रयन्तमुरुं देवेभ्योअकृणोरुलोकम् ३ ॥ ३८ ॥

प्रथश्च वृचं विश्वेदेवास्त्रिष्टुप् आद्यायाः प्रथो वासिष्ठः ।
मध्यायाः सप्रथो भारद्वाजः । अन्त्याया घर्मः सौर्यः ।

१८१ प्रथंश्चयस्यंसप्रथंश्चनामानुंष्टुभस्यहविषोहविर्यत् । धातुर्द्युतानात्सवितुश्चविष्णोरथंतरमाजभारावसिष्ठः १ अविन्दन्तेअतिहितंयदासींद्यज्ञस्यधामंपरमंगुहायत् । धातुर्द्युतानात्सवितुश्चविष्णोर्भरद्वाजोबृहदाचक्रेअग्नेः २ तेऽविन्दन्मनसादीध्यानायजुःष्कन्नंप्रथमंदेवयानम् । धातुर्द्युतानात्सवितुश्चविष्णोरासूर्यादभरन्घर्ममेते ३ ॥ ३९ ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

बृहस्पतिस्तृचं तपुर्मूर्धा बार्हस्पत्यो बृहस्पतिस्त्रिष्टुप् ।

१८२ बृहस्पतिर्नयतुदुर्गहातिरःपुनर्नेषदघशंसायमन्म । क्षिपदशस्तिमपदुर्मतिंहन्नथाकरद्यजमानायशंयोः १ नराशंसोनोऽवतुप्रयाजेशंनोअस्त्वनुयाजोहवेषु । क्षिपदशस्तिमपदुर्मतिंहन्नथाकरद्यजमानायशंयोः २ तपुर्मूर्धातपतुरक्षसोयेब्रह्मद्विषःशरवेहन्तवाउ । क्षिपदशस्तिमपदुर्मतिंहन्नथाकरद्यजमानायशंयोः ३ ॥ ४० ॥

अपश्यं प्रजावान्प्राजापत्योन्वृचं यजमानपत्नीहोत्राशिषस्त्रिष्टुप् ।

१८३ अपश्यंत्वामनसाचेकितानंतपसोजातंतपसोविभूतम् । इहप्रजामिहरयिंरराणःप्रजायस्वप्रजयापुत्रकाम १ अपश्यंत्वामनसादीध्यानांस्वायांतनूऋत्व्येनाधमानाम् । उपमामुच्चायुवतिर्बभूयाःप्रजायस्वप्रजयापुत्रकामे २ अहंग-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भैमदधामोषधीष्वहंविश्वेषुभुवनेष्वन्तः। अहंप्रजाअजनयंपृथिव्यामहंजनिभ्यो अपरीषुपुत्रान् ३ ॥ ४१ ॥

विष्णुस्तृचं त्वष्टा गर्भकर्ता विष्णुर्वा प्राजापत्यो गर्भार्थाशीर्लिङ्गोक्तदेवता अनुष्टुप्।

१८४ विष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिंशतु । आसिंचतुप्रजापतिर्धाता गर्भंदधातुते १ गर्भंधेहिसिनीवालिगर्भंधेहिसरस्वति । गर्भंतेअश्विनौदेवावा धत्तांपुष्करस्रजा २ हिरण्ययीअरणीयंनिर्मन्थतोअश्विना । तंतेगर्भंहवामहे- दशमेमासिसूतवे ३ ॥ ४२ ॥

महि तृचं सत्यधृतिर्वारुणिरादितिः स्वस्त्ययनं गायत्री।

१८५ महित्रीणामवोऽस्तुद्युक्षंमित्रस्यार्यम्णः। दुराधर्षंवरुणस्य १ नहिते-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

षामममाचननाध्वंसुवारणेषु । ईशेरिपुरघशंसः २ यस्मैपुत्रासोअदितेःप्रजीवसेमर्त्याय । ज्योतिर्यच्छन्त्यजस्रम् ३ ॥ ४३ ॥

वातस्तृचमुलो वातायनो वायुर्गायत्री ।

१८६ वातआवातुभेषजंशंभुमयोभुनोहृदे । प्रणआयूंषितारिषत् १ उतवातपितासिनउतभ्रातोतनःसखा । सनोजीवातवेकृधि २ यददोवाततेगृहे३मृतस्यनिधिर्हितः । ततोनोदेहिजीवसे ३ ॥ ४४ ॥

आग्नये पञ्चाग्नेयो वत्सोऽग्निर्गायत्री ।

१८७ प्राग्नयेवाचमीरयवृषभायक्षितीनाम् । सनःपर्षदतिद्विषः १ यःपरस्याःपरावतस्तिरोधन्वातिरोचते । सनःपर्षदतिद्विषः २ योरक्षांसिनिजूर्वत्यग्निस्तिग्मेनशोचिषा । सनःपर्षदतिद्विषः ३ योविश्वाभिविपश्यतिभुवनासंच

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पश्यंति । सनः॑पर्ष॒दति॒द्विषः॑ ४ योअ॒स्यपा॒रेरज॑सः॒शुक्रोअ॒ग्निरजा॑यत । सनः॑पर्ष॒दति॒द्विषः॑ ५ ॥ ४५ ॥

प्र नूनं तृचं श्येन आग्नेयोग्निर्जातवेदा गायत्री ।

१८८ प्रनू॒नंजा॒तवे॑दस॒मश्वं॑हिनोतवा॒जिन॑म् । इ॒दंनो॑ब॒र्हिरा॒सदे॑ १ अ॒स्यप्र जा॒तवे॑दसो॒विप्र॑वीरस्यमी॒ळ्हुषः॑ । म॒हीमि॑यर्मिसुष्टु॒तिम् २ यारुचो॑जा॒तवे॑दसो देव॒त्राह॑व्य॒वाह॑नीः । ताभि॑र्नो॒य॒ज्ञमि॑न्वतु ३ ॥ ४६ ॥

आयं गौरुतृचं सार्पराज्ञी सार्पराज्ञी सूर्यो वा गायत्री ।

१८९ आयंगौः॒पृश्नि॑रक्रमी॒दस॑दन्मा॒तरं॑पु॒रः । पि॒तरं॑चप्र॒यन्त्स्वः॑ १ अ॒न्तश्च॑-रतिरोच॒नास्यप्रा॒णाद॑पान॒ती । व्य॑ख्यन्महि॒षोदिव॑म् २ त्रिं॒शद्धाम॒विरा॑जति॒ वाक्प॑त॒ङ्गाय॑धीयते । प्रति॒वस्तो॒रह॒द्युभिः॑ ३ ॥ ४७ ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ऋतं तृचमघमर्षणो माधुच्छंदसो भाववृत्तमनुष्टुप् ।

१९० ऋतंचंसत्यंचाभींद्धात्तपसोऽध्यंजायत । ततोरात्र्यंजायततततःसमुद्रो अंर्णवः १ समुद्रादंर्णवादधिसंवत्सरोअंजायत । अहोरात्राणिविदधद्विश्वंस्य मिषतोवशी २ सूर्याचन्द्रमसौधातायंथापूर्वमंकल्पयत् । दिवंचपृथिवींचान्त-रिंक्षमथोस्वंः ३ ॥ ४८ ॥

संसं चतुष्कं संवननः संज्ञानमनुष्टुप् । अद्याया अग्निः । उपान्त्या त्रिष्टुप् ।

१९१ संसमिद्युवसेवृषन्नग्नेविश्वांन्यर्यआ । इळस्पदेसमिंध्यसेसनोवसून्या भंर १ संगंच्छध्वंसंवंदध्वंसंवोमनांसिजानताम् । देवाभागंयथापूर्वेसंजानानाउ-पासंते २ समानोमन्त्रःसमितिःसमानीसमानंमनंःसहचित्तमेषाम् । समानं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मन्त्रंमभिमंन्त्रयेवःसमानेनंवोहविषांजुहोमि ३ समानीवआकूंतिःसमाना हृदंयानिवः। समानमंस्तुवोमनोयथांवःसुसहासंति ४ ॥ ४१ ॥ हरिः ॐम् इति शाकलर्क्संहितायामष्टमाष्टकेष्टमोध्यायः ॥ ८ ॥ इत्यष्टाष्टकंसमाप्तम् ॥ ८ ॥ हरिः ॐम्

इति दशमे मण्डले द्वादशोनुवाकः ॥ १० ॥ १२ ॥

इति दशमं मण्डलं समाप्तम् ॥ १० ॥ हरि ॐम्

॥ इति शाकलर्क्संहिता समाप्ता ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

॥ श्रीः ॥

# ॥ अथ परिशिष्टानि ॥

द्वितीयाष्टकस्य पञ्चमाध्यायस्य षोडशवर्गानन्तरं मा विभेरित्यादि परिशिष्टम् ।

हरिः ॐम् माबिभेर्नमंरिष्यसिपरित्वापामिसर्वतः । घनेनहन्मिवृश्चिकमहिंदण्डेनागंतम् १ आदित्यरथवेगेनविष्णुबाहुबलेनंच । गरुडपक्षनिपातेनभूमिंगच्छमहायशाः २ गरुडस्यजातमात्रेणत्रयोलोकाःप्रकम्पिताः । प्रकम्पितामहीसर्वासशैलवनकानना ३ गगनंनष्टचन्द्रार्कंज्योतिषंनप्रकाशते । देवताभयभीताश्चमारुतोनप्लवायतिमारुतोनप्लवायत्योनमः ४ भोसर्पभद्रभद्रंतेदूरंगच्छमहायशाः । जनमेजयस्ययज्ञांतेआस्तीकवचनंस्मर ५ आस्तीकवचनंश्रुत्वायःस-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पौनर्निवर्तते । शतधाभिद्यतेमूर्ध्नाशिंशवृक्षफलंयथा ६ नर्मदायैनमःप्रातर्नर्मदायैनमोनिशि । नमोस्तुनर्मदेतुभ्यंत्राहिमांविषसर्पतः ७ योजरत्कारुणाजातोजरत्कन्यांमहायशाः । तस्यसर्पोपिभद्रंतेदूरंगच्छमहायशाः ८ ॥

अष्टमाध्यायस्य द्वादशवर्गानन्तरं भद्रमित्यादि परिशिष्टम् ।

भद्रंवदक्षिणतोभद्रमुत्तरतोवद । भद्रंपुरस्तान्नोवदभद्रंपश्चात्कपिञ्जल १ भद्रंवदपुत्रैर्भद्रंवदगृहेषुच । भद्रमस्माकंनोवदभद्रंनोअभयंवद २ भद्रमधस्तान्नोवदभद्रमुपरिष्टान्नोवद । भद्रंभद्रंनआवदभद्रंनःसर्वतोवद ३ असपत्नःपुरस्तान्नःशिवंदक्षिणतस्कृधि । अभयंसततंपश्चाद्भद्रमुत्तरतोगृहे ४ यौवनानिमहयसिजिग्युषामिवदुन्दुभिः । शकुन्तकप्रदक्षिणंशतपत्राभिनोवद ५ आवदँस्त्वंशकु



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नेभद्रमावंदत्तूष्णीमासीनःसुमतिंचिकिद्धिनः । यदुत्पतन्वदंसिकर्करिर्यथाबृहद्वदेमविदथेसुवीराः ६ ॥

चतुर्थाष्टकस्य द्वितीयाध्यायस्य पञ्चविंशवर्गानन्तरं जागर्षीत्यादि परिशिष्टम् ।

जागर्षित्वंभुवनेजातवेदोजागर्षियत्रयजंतेहविष्मान् । इदंहविःश्रद्दधानोजुहोमितेनंपाग्निगुह्यंनामगोनाम् १ ॥

तृतीयाध्यायस्य तृतीयवर्गान्ते सूक्तान्त इत्यादि परिशिष्टम् ।

सूक्तान्तेतृणान्यग्नावरण्येवोदकेपिवा । यत्स्तृणैरध्ययनंतदधीतंस्तृणानिभवतेभव । वापीकूपतडागानांसमुद्रंगच्छस्वाहा १ ॥

सप्तमवर्गानन्तरं स्वस्तीत्यादि परिशिष्टम् ।

स्वस्त्ययंनंताक्ष्यमरिष्टनेमिंमहद्भूतंवायसंदेवतानाम् । असुरघ्नमिन्द्रसखंस-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मत्सुंबृहद्यशोनावंमिवारुहेम १ अंहोमुचंमाङ्गिरसंगयंचस्वस्त्यांत्रेयंमनंसाचताक्ष्यम् । प्रयंतपाणिःशरणंप्रपंद्येस्वस्तिसंबाधेष्वभयंनोअस्तु २ ॥

चतुर्थाध्यायस्यैकोनत्रिंशवर्गानन्तरं वर्षन्त्वित्यादि परिशिष्टम् ।

वर्षन्तुतेविभावरिदिवोअभ्रस्यविद्युतः । रोहन्तुसर्वबीजान्यवब्रह्मद्विषोजहि १ ॥

चतुस्त्रिंशवर्गानन्तरं हिरण्यवर्णामित्यादि परिशिष्टम् ।

हिरंण्यवर्णांहरिंणींसुवर्णरजतस्रजाम् । चन्द्रांहिरण्मंयींलक्ष्मींजातवेदोमआवंह १ तांमआवंहजातवेदोलक्ष्मीमनंपगामिनींम् । यस्यांहिरंण्यंविन्देयंगामश्वंपुरुंषानहम् २ अश्वपूर्वांरथमध्यांहस्तिनांदप्रमोदिनीम् । श्रियंदेवीमुपंह्वयेश्रीर्मादेवीजुंषताम् ३ कांसोस्मितांहिरंण्यप्राकारामार्द्रांज्वलंन्तींतृप्तांतर्पयं-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

न्तीम् । पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियम् ४ चन्द्रांप्रभासांयशसाज्वलं-
न्तींश्रियंलोकेदेवजुष्टामुदाराम् । तांपद्मिनीमींशरणंप्रपद्येऽलक्ष्मीर्मेनश्यतां-
त्वांवृणे ५ ॥ १ आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृक्षोथविल्वः । तस्य
फलानितपसानुदन्तुमयान्तरायाश्चबाह्याअलक्ष्मीः ६ उपैतुमांदेवसखः कीर्ति
श्चमणिनासह । प्रादुर्भूतोसुराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे ७ क्षुत्पिपासामलां
ज्येष्ठामलक्ष्मींनाशयाम्यहम् । अभूतिमसमृद्धिंचसर्वांनिर्णुदमेगृहात् ८ गन्ध-
द्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम् । ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ९
मनसः काममाकूतंवाचः सत्यमशीमहि । पशूनांरूपमन्नस्यमयिश्रीः श्रयतांय-
शः १० ॥ २ ॥ कर्दमेनप्रजाभूतामयिसंभवकर्दम । श्रियंवासयमेकुलेमात-
रंपद्ममालिनीम् ११ आपः सृजन्तुस्निग्धानिचिक्लीतवसमेगृहे । निचदेवींमा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तरंश्रियंवासयमेकुले १२ आर्द्रांपुष्करिणींपुष्टिंपिङ्गलांपद्ममालिनीम् । चन्द्रां हिरण्मयींलक्ष्मींजातवेदोमआवह १३ आर्द्रांयःकरिणींयष्टिंसुवर्णांहेममालिनीम् । सूर्यांहिरण्मयींलक्ष्मींजातवेदोमआवह १४ तांमआवहजातवेदोलक्ष्मीमनपगामिनीम् । यस्यांहिरण्यंप्रभूतंगावोदास्योश्वान्विन्देयंपुरुषानहम् १५ ॥ ३ ॥ यःशुचिःप्रयतोभूत्वाजुहुयादाज्यमन्वहम् । सूक्तंपञ्चदशर्चंचश्रीकामःसततंजपेत् १६ पद्माननेपद्मनिपद्मपत्रेपद्मप्रियेपद्मदलायताक्षि । विश्वप्रियेविश्वमनोनुकूलेत्वत्पादपद्मंमयिसंनिधत्स्व १७ पद्माननेपद्मऊरूपद्माक्षीपद्मसंभवे । तन्मेभजसिपद्माक्षियेनसौख्यंलभाम्यहम् १८ अश्वदायींगोदायीधनदायिमहाधने । धनंमेजुषतांदेविसर्वकामांश्चदेहिमे १९ पुत्रपौत्रधनंधान्यंहस्त्यश्वादिगवेरथम् । प्रजानांभवसीमाताआयुष्मन्तंकरोतुमे २० धनमग्निर्धनंवा-





CC-0. Jangamwadi Math Collection. Digitized by eGangotri

युर्धनंसूर्योधनंवसुः । धनमिन्द्रोबृहस्पतिर्वरुणंधनमस्तुमे २१ वैनतेयसोमंपि-
बसोमंपिबतुवृत्रहा । सोमंधनस्यसोमिनोमह्यंददातुसोमिनः २२ नक्रोधोनचमा-
त्सर्यंनलोभोनाशुभामतिः । भवन्तिकृतपुण्यानांभक्तानांश्रीसूक्तंजपेत् २३ सर-
सिजनिलयेसरोजहस्तेधवलतरांशुकगन्धमाल्यशुभे । भगवतिहरिवल्लभेमनो-
ज्ञेत्रिभुवनभूतिकरिप्रसीदमह्यम् २४ विष्णुपत्नींक्षमांदेवींमाधवींमाधवप्रियाम्-
म् । लक्ष्मींप्रियसखींदेवींनमाम्यच्युतवल्लभाम् २५ महालक्ष्म्यैचविद्महेविष्णुप-
त्न्यैचधीमहि । तन्नोलक्ष्मीःप्रचोदयात् २६ श्रीवर्चस्वमायुष्यमारोग्यमाविधा-
च्छोभमानंमहीयते । धान्यंधनंपशुंबहुपुत्रलाभंशतसंवत्सरंदीर्घमायुः २७ ॥

सप्तमाध्यायस्य विंशतितमवर्गानन्तरं चक्षुरित्यादि परिशिष्टम् ।

चक्षुश्चश्रोत्रंचमनश्चवाक्चप्राणापानौदेहइदंशरीरम् । द्यौप्रत्यञ्चावनुलोमौ

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विसर्गांवेतंतंमंन्येदशंयन्त्रमुत्तमम् १ नखंश्चपृष्ठिश्चकरौचबाहूजङ्घेचोरूउदरांशि-
रश्च । रोमाणिमांसंरुधिरंस्थिमज्जमेतच्छरीरंजलबुद्बुदोपमम् २ भ्रुवौलला-
टेचतथांचकर्णौहनूंकपोलौछुबुकंस्तथाच । ओष्ठौचदन्ताश्चतथैवजिह्वामेतच्छ-
रीरंमुखरंत्नकोशम् ३ ॥

पञ्चमाष्टकस्य तृतीयाध्यायस्य त्रिंशवर्गान्ते शंवतीरित्यादि परिशिष्टम् ।

शंवंतीःपारंयन्त्येतेतंपृच्छान्तिवचोयुजा । अभ्यारंतंयमाकेंतुंयएवेदमितिब्रवं-
न् १ भासाकेंतुंपरिस्रुतंभारंतीर्ब्रह्मवर्धनीः । संजानानामहीमातायएवेदमि-
तिब्रवंत् २ इन्द्रस्तंकिंविभुंप्रभुंभानुनेयंसरंस्वतीम् । येनंसूर्यमरोचयद्येनेमेरो-
दसीउभे ३ जुषस्वांग्नेअङ्गिरःकाण्वंमेध्यांतिथिम् । मात्वासोमंस्यबर्बृहत्सुत-
स्यमधुंमत्तमः ४ त्वमंग्नेअङ्गिरःशोचंस्वदेववीतंमः । आशंतमशंतंमाभिरभि-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ष्टिभिःशान्तिःस्वस्तिर्मंकुर्वत ५ शंनःकनिक्रदद्देवःपर्जन्योअभिवर्षतु । शंनो-
द्यावापृथिवीशंप्रजाभ्यःशंनंएधिद्विपदेशंचतुष्पदे ६ ॥

चतुर्थाध्यायस्य द्वाविंशवर्गानंतरं स्वप्नेत्यादि परिशिष्टम् ।

स्वप्नःस्वप्नाधिकरणेसर्वंनिष्वापयाजनम् । आसूर्यमन्यान्स्वापयद्व्युं १ ह्वं
जाग्रियादहम् १ अजंगरोनामसर्पःसर्पिरंविषोमहान् । तस्मिन्हिसर्पःसुधितस्तेनं
त्वास्वापयामसि २ सर्पःसर्पोअजगरःसर्पिरंविषोमहान् । तस्यसर्पात्सिन्धव-
स्तस्यंगाधमंशीमहि ३ काळिकोनामसर्पोनवनागसहस्रबळः । यमुनन्हदेहं
सोजातो ३ योनारायणवाहनः ४ यदिंकाळिकंदूतस्ययदिकाःकाळिकाद्भयात् ।
जन्मभूमिमंतिक्रान्तोनिर्विषोयातिकाळिकः ५ आयाहीन्द्रपथिभिरीळितेभि-
र्यज्ञमिमंनोभागधेयंजुषस्व । तृप्तांजंहुर्मातुळस्येवयोषांभागस्तेपैतृष्वसेयींवपा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मिव ६ यशस्कंरंबलंवन्तंप्रभुत्वंतमेवराजाधिपतिर्बभूव । संकीर्णनागाश्वपतिंर्नराणांसुमङ्गल्यंसततंदीर्घमायुः ७ कर्कोटकोनामसर्पोयोदृष्टीविषउच्यते । तस्यसर्पस्यसर्पत्वंतस्मैसर्पनमोस्तुते ८ नमोअस्तुसर्पेभ्योयेकेचंपृथिवीमनु । येअन्तरिक्षेयेदिवितेभ्यंःसर्पेभ्योनमः ९ ॥

सप्तमाध्यायस्य चतुर्थवर्गानन्तरमुपेत्यादि परिशिष्टम् ।

उपप्लवंदमण्डूकिवर्षमावंदतादुरि । मध्येंह्लदस्यंप्लवस्यंनिगृह्यंचतुरःपुरः १

सप्तमाष्टकस्य द्वितीयाध्यायस्याष्टादश वर्गानन्तरं पावमानीरित्यादि परिशिष्टम् ।

पावमानीःस्वस्त्ययनीःसुदुघाहिघृतश्चुतः । ऋषिभिःसंभृतोरसोब्राह्मणेष्वमृतंहितम् १ पावमानीर्दिशन्तुनइमंलोकमथोअमुम् । कामान्समर्धयन्तुनोदेवीर्देवैःसमाहिताः २ येनदेवाःपवित्रेणात्मानंपुनतेसदा । तेनसहस्रधारेणपाव-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मान्यःपुनन्तुमाम् ३ प्राजापत्यंपवित्रंशतोद्यामंहिरण्मयम् । तेनंब्रह्मविदोवयं पूतंब्रह्मपुनीमहे ४ इन्द्रःसुनीतीसहमांपुनातुसोमःस्वस्त्यावरुणःसमीच्यां । यमोराजांप्रमृणाभिःपुनातुमाजातवेदामूर्जयन्त्यापुनातु ५ ऋषयस्तुतंपस्तेपुःसर्वेस्वर्गजिगीषवः । तपसस्तपसोग्र्यंतुपावमानीर्ऋचोब्रवीत् ६ यन्मेगर्भेवसंतः पापमुग्रंयज्जांयमानस्यंचकिंचिदन्यत् । जातस्यंचयच्चांपिचवर्धतोमेतत्पावमानीभिरहंपुनामि ७ मातापित्रोर्यन्नकृतंवचोमेयत्स्थावरंजङ्गमंमाबभूव । विश्वस्यतत्प्रहृषितंवचोमेतत्पावमानीभिरहंपुनामि ८ गोघ्नात्तस्करत्वात्स्त्रीवधाद्यच्च किल्बिषम् । पापकंचचरंणेभ्यस्तत्पावमानीभिरहंपुनामि ९ ब्रह्मवधात्सुरापानात्स्वर्णस्तेयाद्वृषलिगमनमैथुनसंगमात् । गुरोर्दाराधिगमनाच्चतत्पावमानीभिरहंपुनामि १० बालघ्नान्मातृपितृवधाद्भूमितस्करात्सर्ववर्णगमनमैथुनसंगमात् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पापेभ्यश्चप्रतिग्रहात्सद्यःप्रहरतिसर्वंदुष्कृतंतत्पावमानीभिरहंपुनामि ११ क्रय-
विक्रयाद्योनिदोषाद्भक्षाद्भोज्यात्प्रतिग्रहात् । असंभोजनाच्चापिनृशंसंतत्पावमा-
नीभिरहंपुनामि १२ दुर्यष्टंदुरधीतंपापंयच्चाज्ञानतोकृतम् । अयाजिताश्चासंया-
ज्यास्तत्पावमानीभिरहंपुनामि १३ अमन्त्रमन्नंयत्किंचिद्धूयतेचहुताशने । सं-
वत्सरकृतंपापंतत्पावमानीभिरहंपुनामि १४ ऋतस्ययोनंयोमृतस्यधामविश्वादे-
वेभ्यःपुण्यंगन्धाः । तानआपःप्रवहन्तुपापंशुद्धागच्छामिसुकृतामुलोकंतत्पाव-
मानीभिरहंपुनामि १५ पावमानीःस्वस्त्ययनीर्याभिर्गच्छतिनान्दनम् । पुण्यां-
श्चभक्षान्भक्षयत्यमृतत्वंचगच्छति १६ पावमानींपितॄन्देवान्ध्यायेद्यश्चसरस्वती-
म् । पितॄंस्तस्योपवर्तेतक्षीरंसर्पिर्मधूदकम् १७ पावमानंपरंब्रह्मशुक्रंज्योतिःस-
नातनम् । ऋषींस्तस्योपतिष्ठेतक्षीरंसर्पिर्मधूदकम् १८ पावमानंपरंब्रह्मयेपठ-





CC-0. Jangamwadi Math Collection. Digitized by eGangotri

न्तिमनीषिणः । सप्तंजन्मभवेद्विप्रोधनाढ्योवेदपारगः ११ दशोत्तराण्यृचांश्चै-
वपावमानीःशतानिषट् । एतज्जुह्वञ्जपेन्मन्त्रंघोरमृत्युभयंहरेत् २० ॥

पञ्चमाध्यायस्याष्टाविंशवर्गानन्तरं यत्रेत्यादि परिशिष्टम् ।

यत्रतत्परमंपदंविष्णोर्लोकेमहीयते । देवैःसुकृतकर्मभिस्तत्रमाममृतंकृधी-
न्द्रायेन्दोपरिस्रव १ यत्रतत्परमाव्ययंभूतानामधिपतिम् । भावभावीचयोगीश्चतत्र
माममृतंकृधीन्द्रायेन्दोपरिस्रव २ यत्रलोकास्तंनूत्यजाःश्रद्धयातपसाजिताः । ते-
जश्चयत्रब्रह्मचतत्रमाममृतंकृधीन्द्रायेन्दोपरिस्रव ३ यत्रदेवामहात्मानःसेन्द्रा-
श्चमरुद्गणाः । ब्रह्माचयत्रविष्णुश्चतत्रमाममृतंकृधीन्द्रायेन्दोपरिस्रव ४ यत्रग-
ङ्गाचयमुनाचयत्रप्राचीसरस्वती । यत्रसोमेश्वरोदेवस्तत्रमाममृतंकृधीन्द्रायेन्दो
परिस्रव ॥ ५ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अष्टमाष्टकस्य तृतीयाध्यायस्य षष्ठवर्गानन्तरं सितेत्यादि परिशिष्टम्।

सितासिते सरिते यत्र संगथे तत्राप्लुतासो दिवमुत्पतन्ति । ये वै तन्वं १ विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते १ ॥

अष्टाविंशवर्गानन्तरमविधवेत्यादि परिशिष्टम्।

अविधवा भव वर्षाणि शतं सांग्रं तु सुव्रता । तेजस्वी च यशस्वी च धर्मपत्नी पतिव्रता १ जनयद्बहुपुत्राणि मा च दुःखं लभेत्क्वचित् । भर्ता ते सोमपा नित्यं भवेद्धर्मपरायणः २ अष्टपुत्रा भव त्वं च सुभगा च पतिव्रता। भर्तुश्चैव पितुर्भ्रातुर्हृदयानन्दिनी सदा ३ इन्द्रस्य तु यथेन्द्राणी श्रीधरस्य यथा श्रिया । शंकरस्य यथा गौरी तद्वद्भर्तुरपि भर्तरि ४ अत्रेर्यथानुसूया स्याद्वसिष्ठस्याप्यरुन्धती । कौशिकस्य यथा सती त-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

थात्वंमपिभर्तरि ५ ध्रुवैधिपोष्यामयिमह्यंत्वादाद्बृहस्पतिः । मयापत्यांप्रजावंती संजीवशरदंःशतम् ॥ ६ ॥

अष्टमाष्टकस्य पञ्चमाध्यायस्य त्रयोविंशतिवर्गानन्तरमसावित्यादि परिशिष्टम् ।

असौयासेनामरुतःपरेषामभ्यैतिनओजसास्पर्धमाना । तांगूहततमसापव्रतेनयथामीषांअन्योअन्यंनजानात् १ अन्वाअमित्राभवताशीर्षाणाअहयइव । तेषांवोअग्निदग्धानामग्निमूढ्ळानामिन्द्रोहन्तुवरंवरम् ॥ २ ॥

षष्ठाध्यायस्य द्वितीयवर्गान्ते हविर्भिरित्यादि परिशिष्टम् ।

हविर्भिरेकेस्वरितःसचन्तेसुन्वन्तएकेसवनेषुसोमान् । शचीर्मदन्तउतदक्षिणाभिर्नेज्जिह्मायन्त्योनरकंपताम ॥ १ ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आरांत्रिपार्थिवंरजंःपितरंःप्रायुधामंभिः । दिवःसदांसिबृहतीवितिष्ठसआत्वेषंवंर्ततेतमंः १ येतेंरात्रीनृचक्षंसोयुक्तासोंनवतिर्नवं । अशीतिंःसन्त्वष्टाउतोतेंसप्तसप्तती: २ रात्रींप्रपंद्येजनर्नींसर्वभूतानिवेशंनीम् । भद्रांभगवंतींकृष्णांविश्वस्यंजगतोंनिशाम् ३ संवेशिनींसंयमिनींग्रहनंक्षत्रमालिंनीम् । प्रपंन्नोहंशिवांरात्रींभद्रेपारमशीमंहिभद्रेपारमशीमह्योन्नमंः ४ स्तोष्यामिप्रयतोदेवींशरण्यांबह्वृचप्रियाम् । सहस्रसंमितांदुर्गांजातवेंदसेसुनवामसोमंम् ५ शान्त्यर्थंतद्द्विजातीनांमृषिभिंःसोमपाश्रिंताः । ऋग्वेदेत्वंसंमुत्पन्नामरातीयतोनिदंहातिवेदः ६ येत्वांदेविप्रपद्यन्तिब्राह्मणाहव्यवाहंनीम् । अविद्याबहुविद्यांवासनंःपर्षदतिंदुर्गाणिविश्वा ७ येअग्निवंर्णांशुभांसौम्यांकीर्तयिष्यन्तियेद्विजाः । तांतार-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यतिदुर्गाणिनावेवसिन्धुंदुरितात्यग्निः ८ दुर्गेषुविषमेघोरेसंग्रामेरिपुसंकटे । अ-
ग्निचोरनिपातेचसर्वग्रहनिवारणेदुष्टग्रहनिवारण्योन्नमः ९ दुर्गेषुविषमेषुत्वंसं-
ग्रामेषुवनेषुच । मोहयित्वाप्रपद्यन्तेतेषांमेअभयंकुरुतेषांमेअभयंकुर्वोन्नमः १०
केशिनींसर्वभूतानांपञ्चमीतिचनामच । सामांसमादिशादेवींसर्वतःपरिरक्ष-
तुसर्वतःपरिरक्षत्वोनमः ११ तामग्निवर्णातपसाज्वलन्तींवैरोचनींकर्मफले-
षुजुष्टाम् । दुर्गांदेवींशरणमहंप्रपद्येसुतरसितरसेनमःसुतरसितरसेनमः १२
दुर्गादुर्गेषुस्थानेषुशंनोदेवीरभिष्टये । यइमंदुर्गास्तवंपुण्यंरात्रौरात्रौसदापठेत् १३
रात्रिःकुशिकःसौभरोरात्रिर्वाभारद्वाजीरात्रिस्तवंगायत्रम् । रात्रिसूक्तंजपेन्नि-
त्यंतत्कालेउपपद्यते १४ हिमस्यत्वाजरायुणाशालेपरिव्ययामसि । उतह्रदो
ह्रिनोभियोग्निर्ददातुभेषजम् १५ शीतह्रदोह्रिनोभियोग्निर्ददातुभेषजम् । अ-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

न्तिकामग्निमंजयद्दूर्वादःशिशुलागमत् १६ अजातपुत्रपक्षायांहृदयंममदूयते ।
विपुलंधनंबह्वाकाशंतवंजातवेदःकामाय १६ मांचरक्षपुत्रांश्चशरणमभूत्तवं ।
पिङ्गाक्षलोहितग्रीवकृष्णवर्णनमोस्तुते १८ अस्मान्निवहैरस्योनंसागरंस्यो-
र्मयोयथा । इन्द्रःक्षत्रंददातुवरुणमभिषिंश्चतु १९ शत्रवोनिधनंयान्तुजय-
स्त्वंब्रह्मतेजसा २० कपिलजटींसर्वभक्षंचाग्निंप्रत्यक्षदैवतम् । वरुणंच
वशास्यग्रेममपुत्रांश्चरक्षंतुममपुत्रांश्चरक्षत्वोन्नमः २१ साग्रंवर्षशतंजीवपिव
खादचमोदच । दुःखितांनद्विजांश्चैवप्रजांचपशुपालय २२ यावदादित्यस्तप-
तियावद्भ्राजतिचन्द्रमाः । यावद्वायुःप्लवायतितावज्जीवजयाजय २३ येनंकेनप्र-
कारेणकोहिनांमनजीवंति । परेषामुपकारार्थंयज्जीवंतिसजीवंति २४ नचोर-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भयंनचंसर्पभयंनचंव्याघ्रभयंनचंमृत्युभयंम् । यस्यापमृत्युर्नचमृत्युःससर्वंलभते ससर्वंजयते । एतांवैश्वानरींसर्वदेवनमोस्तुते २५

षोडशवर्गानन्तरमर्वाञ्चमित्यादि परिशिष्टम् । अनन्तरमायुष्यमित्यादि च ।

अर्वाञ्चमिन्द्रंममुतोहवामहेयोगोजिद्धनजिदश्वजिद्यः । इमंनोयज्ञंविहवेजुषस्वास्यकुर्मोहरिवोमेदिनंत्वा १ ॥

आयुष्यंवर्चस्यंरायस्पोषमौद्भिदम् । इदंहिरण्यंवर्चस्वज्जैत्रायाविशतादिमाम् १ उच्चैर्वाजिपृतनाषाट्संभासाहंधनंजयम् । सर्वाःसमग्राऋद्धयोहिरण्येस्मिन्त्समाहिताः २ शुनमहंहिरण्यस्यपितुर्नामेवजग्रभं । तेनमांसूर्यत्वचमकरंपूरुषंप्रियम् ३ सम्राजंचविराजंचाभिष्टिर्याचमेध्रुवा । लक्ष्मीराष्ट्रस्ययामु-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ऋ. सं.

॥६९२॥

खेतयामामिन्द्रसंसृज ४ अग्नेःप्रजातंपरियद्धिरण्यममृतंयज्ञेअधिमर्त्येषु । य
एनद्वेदसइदेनमर्हतिजरामृत्युर्भवतियोबिभर्ति ५ यद्वेदराजावरुणोयद्दुदेवीसर-
स्वती । इन्द्रोयद्वृत्रहावेदतन्मेवर्चसआयुषे ६ नतद्रक्षांसिनपिशाचास्तरन्तिदे-
वानामोजःप्रथमजंह्येतत् । योबिभर्तिदाक्षायणाहिरण्यंसदेवेषुकृणुतेदीर्घमायुः
समनुष्येषुकृणुतेदीर्घमायुः ७ यदाबध्नंदाक्षायणाहिरण्यंशतानीकायसुमनस्यमा-
ना । तन्नआबध्नामिशतशारदायायुष्माञ्जरदष्टिर्यथासत् ८ घृतादुल्लुप्तंमधुमत्सुव-
र्णंधनंजयंधरुणंधारयिष्णु । ऋणक्सपत्नादधरांश्चकृण्वदारोहमांमहतेसौभगा-
य ९ प्रियंमाकुरुदेवेषुप्रियंराजसुमाकुरु । प्रियंविश्वेषुगोप्त्रेषुमयिधेहिरुचारु-
चंम् १० अग्निर्येनविराजतिसूर्योयेनविराजति । विराज्येनविराजतितेनास्मा-
न्ब्रह्मणस्पतेविराजसमिधंकुरु ११

प. शि.



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अष्टमाध्यायस्य नवमवर्गानन्तरं मेधामह्यमित्यादि परिशिष्टम् ।

मेधामह्यमङ्गिरसोमेधांसप्तऋषयोददुः । मेधामिन्द्रश्चाग्निश्चमेधांधाताददा-
तुते १ मेधांतेवरुणोराजामेधांदेवीसरस्वती । मेधांतेअश्विनौदेवावाधत्तांपुष्करस्र-
जा २ यामेधाअप्सरासुगन्धर्वेषुचयन्मनः । दैवीयामानुषीमेधासामामावि-
शतादिमाम् ३ यन्मेनोक्तंतद्रवतांशकेयंयदनुब्रुवे । निशामतंनिशामयिमयि
व्रतंसहप्रियेणभूयासंब्रह्मणासंगमेमहि ४ शरीरंमेविचक्षणवाङ्मेमधुमद्दुहा-
म् । अवृद्धमहमसौसूर्योब्रह्मणानीस्थःश्रुतंमेमाप्रहासीः ५ मेधांदेवींमनसां
रेजमानांगन्धर्वजुष्टांप्रतिनोजुषस्व । मह्यंमेधावदमह्यंश्रियंवदमेधावीभूयास-
मजराजरिष्णु ६ सदसस्पतिमद्भुतंप्रियमिन्द्रस्यकाम्यम् । सनिंमेधामयासि-
षम् ७ यांमेधादेवगणाःपितरश्चोपासते । तयामामेधयामेमेधाविनंकुरु ८

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मेधाव्यंसुमनाःसुप्रतीकःश्रद्धामनाःसत्यमतिःसुशेवः । महायशाधारयिष्णुःप्रवक्ताभूयासमस्मैस्वधयाप्रयोगे ९ नाशयित्रीपलाशस्यारुधंसौपथिकासंसु । अथोतुतस्ययक्ष्माणांपापारोगनाशिनी १० ॥

द्विचत्वारिंशद्वर्गानन्तरं नेजमेषइति परिशिष्टम् ।

नेजंमेषपरापतसुपुत्रःपुनरापत । अस्यैमेपुत्रकामायैगर्भमाधेहियःपुमान् १ यथेयंपृथिवीमह्युत्तानागर्भमादधे । एवंतंगर्भमाधेहिदशमेमासिसूतवे २ विष्णोःश्रेष्ठेनरूपेणास्यांनार्यांगवीन्याम् । पुमांसंपुत्रानाधेहिदशमेमासिसूतवे ३ ॥

षट्चत्वारिंशद्वर्गानन्तरमनीकवन्तमित्यादि परिशिष्टम् ।

अनीकवन्तमूतयेग्निंगीर्भिर्हवामहे । सनःपर्षदतिद्विषः १



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## अध्यायान्ते संज्ञानमित्यादि परिशिष्टम् ।

संज्ञानमुशनावदत्संज्ञानंवरुणोवदत् । संज्ञानमिन्द्रश्चाग्निश्चसंज्ञानंसविता-
वदत् १ संज्ञानंनश्वेभ्यःसंज्ञानमरणेभ्यः । संज्ञानमश्विनायुवमिहास्मासुनि-
यच्छताम् २ यत्कक्षीवांसंवननंपुत्रोअङ्गिरसाभवत् । तेननोद्यविश्वेदेवाःसंप्रि-
यांसमजीजनन् ३ संवोमनांसिजानतांसमाकूतिर्मनामसि । असौयोविम-
नानसस्तंसमावर्तयामसि ४ नैर्हस्त्यंसेनादरणंपरिवर्त्मैतुयद्धविः । तेनामित्रा-
णांबाहून्हविषाशोषयामसि ५ परिवर्त्मान्येषामिन्द्रःपूषाचसस्रतुः । तेषांवो
अग्निदग्धानामग्निमूळ्हानामिन्द्रोहन्तुवरंवरम् ६ ऐषुनह्यवृषाजिनंहरिणस्याभियं-
थंयथा । पराअमित्राएषत्वर्वाचीगौरुपाजतु ७ प्राध्वराणांपतेवसोहोतर्वरेण्य
क्रतो । तुभ्यंगायत्रमृच्यते ८ गोकामोअन्नकामःप्रजाकामउतकश्यपः । भूतं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भविष्यंत्प्रस्तौतिसहब्रह्मैकमक्षरंबहुब्रह्मैकमक्षरम् ९ यदक्षरंभूतकृतंविश्वेदेवा उपासते । महर्षिमस्यंगोप्तारंजमदग्निरकुर्वतम् १० जमदग्निराप्यायतेछन्दोभिश्चतुरुत्तरैः । राजासोमस्यभक्षेणब्रह्मणावीर्यावतांशिवानःप्रदिशोदिशःसत्यानःप्रदिशोदिशः ११ अजोयत्तेजोददृश्रेशुक्रंज्योतिःपरोगुहा । यदृषिःकश्यपःस्तौतिसत्यंब्रह्मचराचरंध्रुवंब्रह्मचराचरम् १२ त्र्यायुषंजमदग्नेःकश्यपस्यत्र्यायुषमगस्त्यस्यत्र्यायुषम् । यद्देवानांत्र्यायुषंतन्मेअस्तुत्र्यायुषंसर्वमस्तुशतायुषंबलायुषम् १३ तच्छंयोरावृणीमहेगातुंयज्ञायगातुंयज्ञपतयेदैवीःस्वस्तिरस्तुनः । स्वस्तिर्मानुषेभ्यऊर्ध्वंजिगातुभेषजंशंनोअस्तुद्विपदेशंचतुष्पदे १४ ॥ हरिः ॐम् ।

इति परिशिष्टानि समाप्तानि ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# ॥ अथ निविदध्यायः ॥

श्रीगणेशायनमः ॥ ॐ अग्निर्देवेद्धः । अग्निर्मन्विद्धः । अग्निःसुषमित् । होताादेववृतः । होतामनुवृतः । प्रणीर्यज्ञानाम् । रथीरध्वराणाम् । अतूर्तोहोता । तूर्णिर्हव्यवाट् । आदेवोदेवान्वक्षत् । यक्षदग्निर्देवोदेवान् । सोअध्वराकरतिजातवेदाः १२ ॥ १ ॥ इन्द्रोमरुत्वान्सोमस्यपिबतु । मरुत्स्तोत्रोमरुद्गणः । मरुत्सखामरुद्वृधः । घ्नन्वृत्रासृजदपः । मरुतामोजसासह । यईमेनंदेवाअन्वमदन् । अप्तूर्येवृत्रतूर्ये । शम्बरहत्येगविष्टौ । अर्चन्तंगुह्यापदा । परमस्यांपरावति । आर्दीब्रह्माणिवर्धयन् । अनाधृष्टान्योजसा । कृण्वंदेवेभ्योदुवः । मरुद्भिःसखिभिःसह । इन्द्रोमरुत्वाँइहश्रवदिहसोमस्यपिबतु । प्रेमांदेवोदेवहूतिमवतुदेव्याधिया । प्रेदंब्रह्मप्रेदंक्षत्रम् । प्रेमंसुन्वन्तंयजमानमवतु । चित्रश्चि-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

त्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसागमत् २० ॥ २ ॥ इन्द्रोदेवःसोमंपिबतु । एकजानांवीरतमः । भूरिदानंतवस्तमः । हर्योःस्थाता । पृश्नेःप्रेता । वज्रस्य भर्ता । पुरांभेत्ता । पुरांदर्मा । अपांस्रष्टा अपांनेता । सत्वनांनेता । निजघ्निर्दूरेश्रवाः । उपमातिकृद्दंसनावान् । इहोशंदेवोबभूवान् । इन्द्रोदेवइहश्रवदिहसोमस्यपिबतु । प्रेमांदेवोदेवहूतिमवतुदेव्याधिया । प्रेदंब्रह्मप्रेदंक्षत्रम् । प्रेमंसुन्वन्तंयजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसागमत् २० ॥ ३ ॥ सवितादेवःसोमस्यपिबतु । हिरण्यपाणिःसुजिह्वः । सुबाहुःस्वङ्गुरिः । त्रिरहन्त्यसवनः । यःप्रासुवद्वसुधीती । उभेजोष्ट्रीसवीमनि । श्रेष्ठंसावित्रमासुवम् । दोग्ध्रींधेनुम् । वोढारमनड्वाहम् । आशुंसप्तिम् । पुरंधिंयोषाम् । जिष्णुंरथेष्ठाम् । सभेयंयुवानम् । परामीवांसाविषत्पराघ



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शंसम् । सविताक्षेवइहश्रवदिहसोमस्यमत्सत् । प्रेमांदेवोदेवहूतिमवतुदेव्याधि-
या । प्रेदंब्रह्मप्रेदंक्षत्रम् । प्रेमंसुन्वन्तंयजमानमवतु । चित्रश्चित्राभिरूतिभिः ।
श्रवद्ब्रह्माण्यावसागमत् २० ॥ ४ ॥ द्यावापृथिवीसोमस्यमत्सताम् । पिता
चमाताच । पुत्रश्चप्रजननंच । धेनुश्चऋषभश्च । धन्याचधिषणाच । सुरेताश्च
सुदुघाच । शंभूश्चमयोभूश्च । ऊर्जस्वतीचपयस्वतीच । रेतोधाश्चरेतोभृच्च ।
द्यावापृथिवीइहश्रुतामिहसोमस्यमत्सताम् । प्रेमांदेवीदेवहूतिमवतांदेव्याधि-
या । प्रेदंब्रह्मप्रेदंक्षत्रम् । प्रेमंसुन्वन्तंयजमानमवताम् । चित्रेचित्राभिरूति-
भिः । श्रुतांब्रह्माण्यावसागमन्ताम् १५ ॥ ५ ॥ ऋभवोदेवाःसोमस्यमत्सन् ।
विष्टीस्वपसः । कर्मणासुहस्ताः । धन्याधनिष्ठाः । शच्याशमिष्ठाः । शच्या
शचिष्ठाः । येधेनुंविश्वजुवंविश्वरूपामरक्षन् । अरक्षन्धेनुमभवद्विश्वरूपी । अ-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ऋ. सं. ॥६९६॥

युञ्जतहरीअयुर्देवाँउप । अबुभ्रन्त्संकनीनामदन्तः । संवत्सरेस्वपसोयज्ञियंभाग-
मायन् । ऋभवोदेवाइहश्रवन्निहसोमस्यमत्सन् । प्रेमांदेवादेवहूतिमवन्तुदेव्या
धिया । प्रेदंब्रह्मप्रेदंक्षत्रम् । प्रेमंसुन्वन्तंयजमानमवन्तु । चित्राश्चित्राभिरूति-
भिः । श्रवद्ब्रह्माण्यावसागमन् १७ ॥ ६ ॥ विश्वेदेवाःसोमस्यमत्सन् । वि-
श्वेवैश्वानराः । विश्वेहिविश्वमहसः । महिमहान्तः । तक्काञ्ज्ञानेमतिर्थीव्रानः ।
अस्क्राःपचतवाहसः । वातात्मानोअग्निदूताः । येद्यांचपृथिवींचातस्थुः । अप-
श्वस्वश्च । ब्रह्मचक्षत्रंच । बर्हिश्चवेदिंच । यज्ञंचोरुचान्तरिक्षम् । येस्थत्रयएका-
दशाः । त्रयश्चत्रिंशच्च । त्रयश्चत्रीचशता । त्रयश्चत्रीचसहस्रा । तावन्तोभिन्ना-
चः । तावन्तोरातिशाचः । तावतीःपत्नीः । तावतीर्ग्नाः । तावन्तउदरणे । ता-
वन्तोनिवेशने । अतोवादेवाभूयांसःस्थ । मावोदेवाअपिशशसामापरिशशसावृ-

प. शि. ॥६९६॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्षि । विश्वेदेवाइहश्रवन्निहसोमस्यमत्सन् । प्रेमांदेवादेवहूतिमवन्तुदेव्याधि-
या । प्रेदंब्रह्मप्रेदंक्षत्रम् । प्रेमंसुन्वन्तंयजमानमवन्तु । चित्राश्चित्राभिरूति-
भिः । श्रवद्ब्रह्माण्यावसागमन् ३० ॥ ७ ॥ अग्निर्वैश्वानरःसोमस्यमत्सत् ।
विश्वेषांदेवानांसमित् । अजस्रंदैव्यंज्योतिः । योविड्भ्योमानुषीभ्योअदीदे-
त् । द्युषुपूर्वासुदिद्युतानः । अजरउषसामनीके । आयोद्यांभात्यांपृथिवीम् ।
ओर्वन्तरिक्षम् । ज्योतिषायज्ञायशर्मयंसत् । अग्निर्वैश्वानरइहश्रवदिहसोमस्य-
मत्सत् । प्रेमांदेवोदेवहूतिमवतुदेव्याधिया । प्रेदंब्रह्मप्रेदंक्षत्रम् । प्रेमंसुन्वन्तंय-
जमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसागमत् १५ ॥ ८ ॥
मरुतोदेवाःसोमस्यमत्सन् । सुष्टुभःस्वर्काः । अर्कस्तुभोबृहद्वयसः । शूराअ-
नाधृष्टरथाः । त्वेषासःपृश्निमातरः । शुभ्राहिरण्यखादयः । तवसोमन्दद्दिष्टयः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नभस्यावर्षनिर्णिजः । मरुतोदेवाइहश्रवन्निहसोमस्यमत्सन् । प्रेमांदेवादेवहूतिमवन्तुदेव्याधिया । प्रेदंब्रह्मप्रेदंक्षत्रम् । प्रेमंसुन्वन्तंयजमानमवन्तु । चित्राश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसागमन् १४ ॥ ९ ॥ अग्निर्जातवेदाःसोमस्यमत्सत् । स्वानीकश्चित्रभानुः । अप्रोषिवान्गृहपतिः । तिरस्तमांसिदर्शतः । घृताहवनईड्यः । बहुलवर्मास्तृतयज्वा । प्रतीत्याशत्रूञ्जेतापराजितः । अग्नेजातवेदोभिद्युम्नमभिसहआयच्छस्व । तुशोअप्तुशः । समेद्धारंस्तोतारमंहसस्पाहि । अग्निर्जातवेदाइहश्रवदिहसोमस्यमत्सत् । प्रेमांदेवोदेवहूतिमवतुदेव्याधिया । प्रेदंब्रह्मप्रेदंक्षत्रम् । प्रेमंसुन्वन्तंयजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसागमत् १६ ॥ १० ॥ अस्यमदेजरितरिन्द्रःसोमस्यमत्सत् । अस्यमदेजरितरिन्द्रोहिमहन् । अस्यमदेजरितरिन्द्रोवृत्रमहन् । अस्य



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मदेजरितरिन्द्रोपांवेगमैरयत् । अस्यमदेजरितरिन्द्रोजिन्वदजुवोपिन्वदपितः । अस्यमदेजरितरिन्द्रउदार्यैवर्णमतिरदवदासीद्दिशोअस्तभ्नात् । अस्यमदेजरितरिन्द्रउद्दयामस्तभ्नादप्रथयत्पृथिवीम् । अस्यमदेजरितरिन्द्रोदिविसूर्यमैरयद्ध्वन्तरिक्षमतिरत् । अस्यमदेजरितरिन्द्रःसमुद्रंप्रकुपितमरम्णात् । अस्यमदेजरितरिन्द्रऋष्याँइवपंफणतःपर्वतान्प्रकुपिताँअरम्णात् । अस्यमदेजरितरिन्द्रइहश्रवदिहसोमस्यमत्सत् । प्रेमांदेवोदेवहूतिमवतुदेव्याधिया । प्रेदंब्रह्मप्रेदंक्षत्रम् । प्रेमंसुन्वन्तंयजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसागमत् १६ ॥ ११ ॥ अग्निर्द्वादश । इन्द्रोमरुत्वानिन्द्रोदेवःसवितादेवःपृथग्विंशतिः । द्यावापृथिवीपञ्चदश । ऋभवोदेवाःसप्तदश । विश्वेदेवास्त्रिंशत् । अग्नि-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वैश्वानरःपञ्चदश । मरुतोदेवाश्चतुर्दश । अग्निर्जातवेदाअस्यमदेपृथक्षोळश ॥ ८ ॥ १२ ॥ ॐम् ॥ इतिनिविदध्यायः ॥

## ॥ अथ कुन्तापाध्यायः ॥

ॐम् तत्रादौनाराशंस्यः ॥ इदंजनाउपश्रुतनराशंसस्तविष्यते । षष्टिंसहस्रानवतिंचकौरमआरुशमेषुदद्महे ॥ उष्ट्रायस्यप्रवाहणोवधूमन्तोद्विर्दश । वर्ष्मारथस्यनिजिहीळतेदिवईषमाणाउपस्पृशः ॥ एषइयायमामहेशतंनिष्कान्दशस्रजः । त्रीणिशतान्यर्वतांसहस्रादशगोनाम् ॥ ३ ॥ इतितिस्रोनाराशंस्यः ॥ ॥

अथरैभ्यः ॥ ॥ वच्यस्वरेभवच्यस्ववृक्षेनपक्केशकुनः । नष्टेजिह्वाचर्चरीतिक्षुरोनभुरिजोरिव ॥ प्ररेभासोमनीषयावृथागावइवेरते । अमोतपुत्रकाएषाममोत-





CC-0. Jangamwadi Math Collection. Digitized by eGangotri

काइवासते ॥ प्ररेभधियंभरस्वगोविदंवसुविदम् । देवत्रेमांवाचंश्रीणीहीषुर्नवीर-मस्तारम् ॥ ३ ॥ ॥ इतितिस्रोरैभ्याः ॥ ॥

अथपारिक्षित्यः ॥ ॥ राज्ञोविश्वजनीनस्ययोदेवोमर्त्याँअति । वैश्वानरस्यसुष्टुतिमासुनोतापरिक्षितिः ॥ परिक्षिन्नःक्षेममकरत्तमासुनुमासरम् । मरायन्कुर्वन्कौरव्यःपतिर्वदतिजायया ॥ कतरत्तआहराणिदधिमन्थांपरिस्रुताम् । जायापतिंविपृच्छतिराष्ट्रेराज्ञःपरिक्षितः ॥ अभीवर्ष्मप्राजिहातेयवःपक्वःपथोविलम् । जनःसभद्रमैधत्तराष्ट्रेराज्ञःपरिक्षितः ॥ ४ ॥ ॥ इतिचतस्रःपारिक्षित्यः ॥ ॥

अथकारव्यः ॥ ॥ इन्द्रःकारुमबूबुधदुत्तिष्ठविचराजनम् । ममेदुग्रस्यचर्कृधिसर्वाइत्तेपृणादरिः ॥ इहगावःप्रजायध्वमिहाश्वाइहपूरुषाः । इहोसहस्रदक्षिणोवीरस्त्रातानिषीदतु ॥ नेमाइन्द्रगावोरिषन्मोआसांगोपतीरिषत् । मासाममित्रयु-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

र्जनइन्द्रमास्तेनईशत ॥ उपवोनरएमसिसूक्तेनवचसावयंभद्रेणवचसावयम् । चनोदधिध्वंनोअङ्गिरोनरिष्येमकदाचन ॥ ४ ॥ ॥ इतिचतस्रःकारव्यः॥ ॥

अथदिशांक्लृप्तयः॥ ॥यःसभेयोविदथ्यःसुत्वायज्वाचपूरुषः। सूर्यंचाभूरिशादसन्तंदेवाःप्रागकल्पयन् ॥ योजाम्याअप्रथस्तदद्यःसखायन्निनित्सति । ज्येष्ठो यदिप्रचेतास्तदाहुरधरागिति ॥ यद्भद्रस्यपुरुषस्यपुत्रोभवतिदाधृषिः । तद्विप्रो अब्रवीदुदग्गन्धर्वःकाव्यंवचः ॥ यश्चपणिरभुंजिष्योयश्चरेवाँअदाशुरिः । धीराणांशश्वतामहंतदपागितिशुश्रुम ॥ येचदेवाअयजन्ताथोयेचपरादर्दिः । सूर्यो दिवमिवगत्वामघवानोविरप्शते ॥ ५ ॥ ॥ इतिपञ्चदिशांक्लृप्तयः ॥ ॥

अथजनकल्पाः॥ ॥योनाक्ताक्षोअनभ्यक्तोमणिवोअहिरण्यवः।अब्रह्माब्रह्मणस्पुत्रस्तोताकल्पेषुसंमितः ॥ यआक्ताक्षःस्वभ्यक्तःसुमणिःसुहिरण्यवः। सुब्र-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ह्मावह्मणस्पुत्रस्तोताकल्पेषुसंमितः ॥ अप्रपाणाचयेशान्तारेवाँअप्रददिश्वयः । अयश्वाकन्याकल्याणीतोताकल्पेषुसंमितः ॥ सुप्रपाणाचयेशान्तारेवान्सुप्रददि श्वयः । सुयश्वाकन्याकल्याणीतोताकल्पेषुसंमितः ॥ वावाताचमहिष्यंनस्ताच युधिंगमः । अनाशुरश्वआयामीतोताकल्पेषुसंमितः ॥ परिवृक्ताचमहिषीविश्व-स्त्याचयुधिंगमः । स्वाशुरआयामीतोताकल्पेषुसंमितः ॥ ६ ॥ ॥ इतिषड्-जनकल्पाः ॥ ॥

अथेन्द्रगाथाः॥ ॥ यदिन्द्रोदाशराज्ञेमानुषंव्यगाहथाः । विरूपःसर्वस्मा आ-सीत्सहयक्षायकल्पते ॥ त्वंवृषाक्षंमघवन्नम्रंमर्याकरोरभि । त्वंरौहिणंव्यास्यस्त्वं-वृत्रस्याभिनच्छिरः ॥ यःपर्वतान्व्यदधाद्योअपोव्यगाहथाः । योवृत्रोवृत्रहन्नहंस्त-स्माइन्द्रनमोस्तुते ॥ प्रष्टिंधावन्तंहर्योरौच्चैःश्रवसमब्रुवम् । स्वस्त्यश्वजैत्रायेन्द्र-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मावहसुस्रजम् ॥ यस्त्वाश्वेतोच्चैःश्रवसंहर्योयुञ्जन्तिदक्षिणम् । मूर्धानमश्वंदेवा-
नांबिभ्रदिन्द्रंमहीयसे ॥ ५ ॥ ॥ इतिपञ्चेन्द्रगाथाः ॥ ॥

अथैतशप्रलापाः ॥ ॥ एताअश्वाआप्लवन्ते । प्रतीपंप्रातिसत्वनम् । तासामेका
हरिक्निका । हरिक्निकेकिमिच्छसि । साधुंपुत्रंहिरण्ययम् । क्वाहकंपरास्यः । यत्रा
मूस्तिस्त्रःशिंशपाः । परित्रयःपृदाकवः । शृङ्गंधमन्तआसते । अयंमहान्तेअ-
वहि । सइत्थकंसएवकम् । सघाघतेसघागमे । गोमीघमोमिनीरभि । पुमा-
न्भूम्नेनिनित्सति । बह्ववथोइति । बह्वोअथोइति । अजकोरकोविका । अश्वस्य
वालोगोशफः । केशिनीश्येनीएनीवा । अनामयोपजिह्विका । कोअम्बकुलि
मायुनि । कोअर्जुन्याःपयः । कोअसिक्न्याःपयः । एतंपृच्छकुहंपृच्छ । कुहा-
कंपक्ककंपृच्छ । यआयन्तिश्वभिष्कुभिः । अकुभ्यन्तःकुभायवः । आमणकोम-





CC-0. Jangamwadi Math Collection. Digitized by eGangotri

णत्थकः । देवत्तःप्रतिहूर्यः । पिनष्टिपतिकाहविः । प्रबुद्दुदोमथायति । शुङ्गउत्प
त । मात्वाबिसखानाविदन् । वशायाःपुत्रमायान्तम् । इराचेन्द्रममन्दत । इ-
यंनियंनिति । अथोइयंनिति । अथोज्यायस्तरोभुवत् । इयंयकाशलाकका ।
आमिणोतिनिभज्यते । तस्याअनुनिभञ्जनम् । वरुणोयातिबभ्रुभिः । शतंब-
भ्रोरभीशवः । शतंकशाहिरण्ययीः । शतंरथाहिरण्ययाः । आहलकुःशवर्तकुः।
आयवनेनतेजनिः । शफेनपीवओहति । वनिष्ठुनोपनृत्यति । इयंमह्यमदुरि-
ति । तेवृक्षाःसहतिष्ठन्ति । पाकवलिःशकवलिः । अश्वत्थःखबुरोधवः।अरदुः
परमःशये । हतइवपापूरुषः । अदोहमितपीयूषकम् । द्वौचहस्तिनौदती । अ-
ध्यर्धंचपरस्वतः । आदलाबुकमेककम् । अलाबुकंनिखातकम्। कर्करिकोनि-
खातकः । तद्वातउन्मथाइति । कुलायंकरवाँइति । उग्रंबलिशदाततम् । नव-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

लिशनदाततम्। कएषांकर्करींरिखत् । कएषांदुन्दुभिंहनत्। यदींहनत्कथंहनत्। दैर्लींहनत्कथंहनत्। पर्याकारंपुनःपुनः॥७०॥ ॥इतिसप्ततिरैतशतप्रलापाः॥ ॥

अथप्रवह्लिकाः ॥ वितततौकिरणौद्वौतावापिनष्टिपूरुषः । नवैकुमारितत्तथाय-थाकुमारिमन्यसे ॥ मातुष्टेकिरणौद्वौनिर्वीतःपुरुषाद्दते । नवैकुमारितत्तथायथा कुमारिमन्यसे ॥ निगृह्यकर्तकौद्वौनिरायच्छसिमध्यमाम् । नवैकुमारितत्तथा यथाकुमारिमन्यसे ॥ उत्तानायैशयानायैतिष्ठन्नैवावगूहसि । नवैकुमारितत्तथा यथाकुमारिमन्यसे ॥ श्लक्ष्णायांश्लक्ष्णिकायांश्लक्ष्णमेवावगूहसि । नवैकुमारि तत्तथायथाकुमारिमन्यसे ॥ अवश्रक्ष्णमवभ्रदन्तर्लोमवतिह्रदे । नवैकुमारि तत्तथायथाकुमारिमन्यसे ॥ ६ ॥ ॥ इतिषट्प्रवह्लिकाः ॥ ॥

अथाजिज्ञासेन्याः॥ ॥इहेत्थप्रागपागुदगधराक्। अरालाउदभन्थते॥ इहे-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

त्थप्रागपागुदगधराक् । वत्साःपुषन्तआसते ॥ इहेत्थप्रागपागुदगधराक् । सर्वी पुत्सीलिलीशये ॥ इहेत्थप्रागपागुदगधराक् । स्थालीपाकाविलीयते ॥ ४ ॥
॥ इति चतस्र अजिशासेन्याः ॥

अथ प्रतिराध्यः॥ भुगित्यभिगतः ॥ शरित्यभिष्ठितः ॥ फलित्यपक्रान्तः॥३॥
इति तिस्रःप्रतिराध्यः ॥

अथातिवादः ॥ ॥ वीमेदेवाअक्रंसताध्वर्योक्षिप्रंप्रचर । सुशस्तिरिद्गवाम-स्यतिप्राक्खिदसोमहै ॥ २ ॥ ॥ इत्यतिवादः ॥

अथ देवनीथाः॥ ॥ आदित्याहजरितरङ्गिरोभ्योदक्षिणामनयन् । तांहजरितर्न प्रत्यायन् । तामुहजरितः प्रत्यायन् । तांहजरितर्नप्रत्यगृभ्णन् । तामुहजरितः प्रत्यगृभ्णन् । अहानेतसंनविचेतनानि । जज्ञानेतसन्नपुरोगवासः । उतश्वेत



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आशुपत्वा । उतोपद्याभिर्जविष्ठः । उतेमाशुमानंपिपर्ति । आदित्यारुद्रावसवस्त्वेळते । इदंराधःप्रतिगृभ्णीह्यङ्गिरः । इदंराधोबृहत्पृथु । देवाददत्वावरम् । तद्वोअस्तुसुचेतनम् । युष्मेअस्तुदिवेदिवे । प्रत्येवगृभायत ॥ १७ ॥ ॥ इति सप्तदश देवनीथाः ॥

अथ भूतेच्छदः ॥ त्वमिन्द्रशर्मरिणाहव्यंपरावतेभ्यः । विप्रायस्तुवतेवसूनि जुरश्रवसेमहे ॥ त्वमिन्द्रकपोतायच्छिन्नपक्षायवञ्चते । श्यामाकंपक्वंपीलुचवारस्मा अकृणोर्बहु ॥ अरंगरोवावदीतित्रेधाबद्धोवरत्रया । इरामुहप्रशंसत्यनिराममपबाधताम् ॥ ३ ॥ ॥ इति तिस्रोभूतेच्छदः ॥

अथाऽऽहनस्याः ॥ ॥ यदस्याअंहुभेद्याःपृथुस्थूरमुपातसत् । मुष्काविदस्याएजतेगोशफेशकुलाविव ॥ यदास्थूरेणपससाअनूमुष्काउपावधीत् । विष्वञ्चाव-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्याअर्द्तेसिकतास्विवगर्दभः ॥ यदल्पिकास्वल्पिकाकर्कन्धुकेवपच्यते । वासन्तिकमिवतेजनोयभ्यमानावितन्वते ॥ यद्देवासोललागसुंप्रपिष्टीपिनमापिबुः । सक्थादेद्दश्यतेनरःसक्थ्यःसाक्षीवगोयथा ॥ महाणग्न्युपब्रूतेअश्वस्यावेशितंपसः । ईहक्फलस्यवृक्षस्यशूर्पंशूर्पंभजेमहि ॥ महाणग्न्यहृत्संहिसोक्रन्ददस्तमासरत् । शक्कुकाननाशकामशकंसक्थ्युद्यमत् ॥ महाणग्न्युलूखलमतिक्रामन्त्यब्रवीत् । यथैवतेवनस्पतेपिघ्नन्तितथैवमे ॥ महान्वैभद्रोविल्वोमहान्पक्कउदुम्बरः । महाँअभिज्ञुबाधतेमहतःसाधुखोदनम् ॥ ८ ॥ ॥इत्यष्टाऽऽहनस्याः ॥ इतिकुन्तापाध्यायस्समाप्तः ॥

अथ पुरोरुक् ॥ वायुरग्रेगायज्ञप्रीःसाकंगन्मनसायज्ञम् । शिवोनियुद्भिःशिवाभिः ॥ हिरण्यवर्तनीनरादेवापतीअभिष्टये । वायुश्चेन्द्रश्चसुमुखः ॥ काव्यारा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

जानाकृत्वादक्षस्यदुरोणे । रिशादसासधस्थआ ॥ दैव्याअध्वर्यूआगतंरथेन सूर्यत्वचा । मध्वायज्ञंसमञ्जाथे ॥ इन्द्रउक्थेभिर्मन्दिष्ठोवाजानांचवाजपतिः । हरिवांसुतानांसखा ॥ विश्वान्देवान्हवामहेस्मिन्यज्ञेसुपेशसः । तइमंयज्ञमागमंदेवासोदेव्याधिया ॥ जुषाणाअध्वरेसदोयेयज्ञस्यतनूकृतः । विश्वआसोमपीतये ॥ वाचमहंदेवींवाचास्मिन्यज्ञेसुपेशसा । सरस्वतींहवामहे ॥ ८ ॥

॥ इत्यष्ट पुरोरुक् ॥

अथ प्रैषाः॥ तत्रादौ(प्रयाजप्रैषाः) ॥ होतायक्षदग्निंसमिधासुषमिधासमिद्धंनाभापृथिव्याःसंगथेवामस्य । वर्ष्मन्दिवइळस्पदेवेत्वाज्यस्यहोतर्यज ॥ होतायक्षत्तनूनपातमदितेर्गर्भंभुवनस्यगोपाम् । मध्वाद्यदेवोदेवेभ्योदेवयानान्पथोअनक्तुवेत्वाज्यस्यहोतर्यज ॥ होतायक्षन्नराशंसंनृशस्तंनॄँःप्रणेत्रम् । गोभिर्वपावा-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

न्त्स्याहीरैः शक्तीवान्नथैः प्रथमयावाहिरण्यैश्चन्द्रीवेत्वाज्यस्यहोतर्यज ॥ होतायक्ष
दग्निमीळईळितोदेवोदेवाँऽआवक्षद्दूतोहव्यवाळमूरः । उपेमंयज्ञमुपेमांदेवोदेव-
हूतिमवतुवेत्वाज्यस्यहोतर्यज ॥ होतायक्षद्बर्हिः सुष्टरीमोर्णम्रदाअस्मिन्यज्ञेवि
चप्रचप्रथतांस्वासस्थंदेवेभ्यः । एमेनदद्यवसवोरुद्राआदित्याः सदन्तुप्रियमिन्द्र-
स्यास्तुवेत्वाज्यस्यहोतर्यज ॥ होतायक्षद्दुरऋष्वाः कवष्योकोषधावनीरुद्रातामभि-
र्जिहतांविपक्षोभिः श्रयताम् । सुप्रायणाअस्मिन्यज्ञेविश्रयन्तामृतावृधोव्यन्त्वा-
ज्यस्यहोतर्यज ॥ होतायक्षदुषासानक्तावृहतीसुपेशसानॄँःपतिभ्योयोनिंकृण्वा-
ने । संस्मयमानेइन्द्रेणदेवैरेदंबर्हिः सीदतांवीतामाज्यस्यहोतर्यज ॥ होतायक्षद्दै-
व्याहोतारामन्द्रापोताराकवीप्रचेतसा । स्विष्टमद्यान्यः करदिषास्वभिगूर्तमन्य-
ऊर्जासतवसेमंयज्ञंदिविदेवेषुधत्तांवीतामाज्यस्यहोतर्यज ॥ होतायक्षत्तिस्रोदेवी-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रपसामपस्तमाअच्छिद्रमद्येदमपस्तन्वताम् । देवेभ्योदेवीर्देवमपोऽयन्त्वाज्यस्य होतर्यज ॥ होतायक्षत्त्वष्टारमचिष्टमपाकंरेतोधांविश्रवसंयशोधाम् । पुरुरूपमकामकर्शनंसुपोषःपोषैःस्यात्सुवीरोवीरैर्वेत्त्वाज्यस्यहोतर्यज ॥ होतायक्षद्वनस्पतिमुपावस्त्रक्षद्धियोजोष्टारंशशमंनरः । स्वदान्स्वधितिर्ऋतुथाद्यदेवोदेवेभ्योहव्यवाड्वेत्वाज्यस्यहोतर्यज ॥ अजैदग्निरसनद्वाजंनिदेवोदेभ्योहव्यवाट्प्राङ्गोभिर्हिन्वानोधेनाभिःकल्पमानोयज्ञस्यायुःप्रतिरन्नुपप्रेष्यहोतर्हव्यादेवेभ्यः ॥ होतायक्षदग्निंस्वाहाज्यस्यस्वाहामेदसःस्वाहास्तोकानांस्वाहास्वाहाकृतीनांस्वाहाहव्यसूक्तीनाम् । स्वाहादेवाआज्यपाजुषाणाअग्नआज्यस्यव्यन्तुहोतर्यज॥ १३ ॥

॥ इति त्रयोदशप्रयाजप्रैषाः ॥

(अथपाशुकप्रैषाः)॥ होतायक्षदग्निमाज्यस्यजुषतांहविर्होतर्यज ॥ होतायक्षत्सो-





CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ममाज्यस्यजुषतांहविर्होतर्यज ॥ होतायक्षदग्नीषोमौछागस्यवपायामेदसोजुषेतां हविर्होतर्यज ॥ होतायक्षदग्नीषोमौपुरोळाशस्यजुषेतांहविर्होतर्यज ॥ होतायक्षद-ग्निंपुरोळाशस्यजुषतांहविर्होतर्यज ॥ होतायक्षदग्नीषोमौछागस्यहविषआत्ताम-द्यमध्यतोमेदउद्भृतंपुराद्वेषोभ्यःपुरापौरुषेय्यागृभःघस्तान्नूनंघासेअज्राणांयवस-प्रथमानांसुमत्क्षराणांशतरुद्रियाणामग्निष्वात्तानांपीवोपवसनानांपार्श्वतःश्रोणि तःशितामतउत्सादतोङ्गादङ्गादवत्तानांकरतएवाग्नीषोमौजुषेतांहविर्होतर्यज ॥ दे-वेभ्योवनस्पतेहवींषिहिरण्यपर्णप्रदिवस्तेअर्थम् । प्रदक्षिणिद्रशनयानियूयऋत-स्यवक्षिपथिभीरजिष्ठैः ॥ होतायक्षद्वनस्पतिमभिहिपिष्टतमयारभिष्टयारशनया-भित । यत्राग्नेराज्यस्यहविषःप्रियाधामानियत्रसोमस्याज्यस्यहविषःप्रियाधामा-नियत्राग्नीषोमयोश्छागस्यहविषःप्रियाधामानियत्रवनस्पतेःप्रियापाथांसियत्रदे-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वानामाज्यपानांप्रियाधामानियत्राग्नेर्होतुःप्रियाधामानितत्रैतंप्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद्रभीयांसमिवकृत्वीकरदेवंदेवोवनस्पतिर्जुषतांहविर्होतर्यज ॥ वनस्पतेरशनयानियूयपिष्टतमयावयुनानिविद्वान् । वहदेवत्रादिधिषोहवींषिप्रचदातारममृतेषुवोचः । होतायक्षदग्निंस्विष्टकृतमयाळग्निरग्नेराज्यस्यहविषःप्रियाधामान्ययाट्सोमस्याज्यस्यहविषःप्रियाधामान्ययाळग्नीषोमयोश्छागस्यहविषःप्रियाधामान्ययाड्वनस्पतेः प्रियापाथांस्ययाड्देवानामाज्यपानांप्रियाधामानियक्षदग्नेर्होतुःप्रियाधामानियक्षत्स्वंमहिमानमायजतामेज्याइषःकृणोतुसोअध्वराजातवेदाजुषतांहविर्होतर्यज ॥ २१ ॥ इत्येकविंशतिःपाशुकप्रैषाः ॥ (अथानुयाजप्रैषाः)॥ देवंबर्हिःसुदेवंदेवैःस्यात्सुवीरंवीरैर्वस्तोर्वृज्येताक्तोःप्रभ्रियेतात्यन्यान्त्रायाबर्हिष्मतोमदेववसुवनेवसुधेयस्यवेतुयज ॥ देवीर्द्वारःसंघातेविड्वीर्यामंछि-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

थिराध्रुवादेवहूतौवत्सईमेनास्तरुणआमिमीयात्कुमारोवाचनजातौमैनाअर्वारे-
णुककाटःपृणग्वसुवनेवसुधेयस्यव्यन्तुपज ॥ देवीउषासानक्ताद्यास्मिन्यज्ञेप्रय-
त्यह्वेतामपिनूनंदैवीर्विशःप्रायासिष्टांसुप्रीतेवसुधितेवसुवनेवसुधेयस्यवीतांयज॥
देवीजोष्ट्रीवसुधितीययोरन्याघाद्वेषांसियुयवदान्यावक्षद्वसुवार्याणियजमानायव-
सुवनेवसुधेयस्यवीतांयज ॥ देवीऊर्जाहुतीइषमूर्जमन्यावक्षत्सग्धिंसपीतिम-
न्यानवेनपूर्वंदयमानास्यामपुराणेननवन्तामूर्जमूर्जाहुतीऊर्जयमाने अधातांव-
सुवनेवसुधेयस्यवीतांयज ॥ देवादैव्याहोतारापोतारानेष्टाराहताघशंसावाभर
द्वसूवसुवनेवसुधेयस्यवीतांयज॥ देवीस्तिस्रस्तिस्रोदेवीरिळासरस्वतीभारतीद्यां
भारत्यादित्यैरस्पृक्षत्सरस्वतीमंरुद्रैर्यज्ञमावीदिहैवेळयावसुमत्यासधमादंमदेमव
सुवनेवसुधेयस्यव्यन्तुयज ॥ देवोनराशंसस्त्रिशीर्षाषळक्षःशतमिदेनंशितिपृष्ठा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आदधतिसहस्रमींप्रवहन्तिमित्रावरुणेदस्युहोत्रमर्हतोबृहस्पतिस्तोत्रमश्विनाध्व-
र्यवंवसुवनेवसुधेयस्यवेतुयज ॥ देवोवनस्पतिर्वर्षप्रावाघृतनिर्णिकूद्यामग्रेणास्पृ-
क्षदान्तरिक्षंमध्येनाप्राःपृथिवीमपरेणादंहीद्वसुवनेवसुधेयस्यवेतुयज ॥ देवंबर्हि-
र्वारितीनांनिधेधासिप्रच्युतीनामप्रच्युतंनिकामधरणंपुरुस्पार्हंयशस्विदेनाबर्हि-
न्याबर्हींष्यभिष्यामवसुवनेवसुधेयस्यवेतुयज ॥ देवोअग्निःस्विष्टकृत्सुद्रविणा-
मन्द्रःकविःसत्यमन्मायजीहोताहोतुर्होतुरायजीयानग्नेयांदेवानयाड्याँअपिप्रेर्ये-
तेहोत्रेअमत्सततांससनुर्षीहोत्रांदेवगमांदिविदेवेषुयज्ञमेरयेमंस्विष्टकृच्चाग्नेहोता-
भूर्वसुवनेवसुधेयस्यनमोवाकेवीहियज ॥ ३२ ॥(अथसूक्तवाकप्रैषाः) ॥ अग्नि-
मद्यहोतारमवृणीतायंयजमानःपचन्पक्तीःपचन्पुरोळाशंगृह्णन्नग्नयआज्यंगृह्णन्त्सो-
मायाज्यंबध्नन्नग्नीषोमाभ्यांछागंसूपस्थाअद्यदेवोवनस्पतिरभवदग्नयआज्येनसो-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मावाज्येनाग्नीषोमाभ्यांछागेनाद्यस्तंतंमेदस्तःप्रतिपचताग्रभीष्टामवीवृधेतांपुरो-
ळाशेनत्वामद्यर्षआर्षेयऋषीणांनपादवृणीतायंयजमानोबहुभ्यआसंगथेभ्यः ।
एषमेदेवेषुवार्यायक्ष्यतइतितायादेवादेवदानान्यदुस्तान्यस्माआचशास्वाचगुरस्वे
षितश्चहोतरसिभद्रवाच्यायप्रेषितोमानुषःसूक्तवाकायसूक्ताब्रूहि॥२३॥(अथ-
सुत्यायांसवनीयप्रैषाः)॥ होतायक्षदग्निंछागस्यवपायामेदसोजुषतांहविर्होतर्य-
ज ॥ होतायक्षदिन्द्रंहरिवाँइन्द्रोधानाअत्तूपूषण्वान्करम्भंसरस्वतीवान्भारतीवा-
न्परिवापइन्द्रस्यापूपः। मित्रावरुणयोःपयस्याप्रातःप्रातःसावस्यपुरोळाशाँइन्द्रः
प्रस्थितांजुषाणोवेतुहोतर्यज । होतायक्षदग्निंपुरोळाशानांजुषतांहविर्होतर्यज ॥
होतायक्षद्वायुमग्रेगामग्रेयावाणमग्रेसोमस्यपातारंकरदेवंवायुरावसागमञ्जुषतां
वेतुपिबतुसोमंहोतर्यज ॥ होतायक्षदिन्द्रवायूअर्हन्तार्हाणागव्याभिर्गोमन्ताभि-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यन्तांवीरयाशुक्रयाएनयोर्नियुतोगोअग्रावीरोपशाश्वपुरस्त्यास्तासामिहप्रयाण-
मस्त्विहविमोचनंकरतएवेन्द्रवायूजुषेतांवीतांपिबतांसोमंहोतर्यज ॥ होतायक्ष-
न्मित्रावरुणासुक्षत्रारिशादसानिचिन्मिषन्तानिचिरानिचिर्थंसाक्ष्णाश्विद्वातुवि
त्तरानुल्बणेनचक्षसऋतमृतमितिदीध्यानाकरतएवंमित्रावरुणाजुषेतांवीतांपिब-
तांसोमंहोतर्यज ॥होतायक्षदश्विनानासत्यादीद्यग्रीरुद्रवर्तिनीन्यन्तरेणचक्रेणवा-
मीरिषऊर्जावहतंसुवीराःसलुत्तरेणाररुषोबाधेतांमधुकशयेमंयज्ञंयुवानामिमिक्ष-
तांकरतएवाश्विनाजुषेतांवीतांपिबतांसोमंहोतर्यज ॥ होतायक्षदिन्द्रंप्रातःप्रातः
सावस्यावीवतोगमदापरावतओरोरन्तरिक्षादास्वात्सधस्थादिमेअस्मैशुक्रामधु-
श्चुतःप्रस्थिताइन्द्रायसोमास्तांजुषतांवेतुपिबतुसोमंहोतर्यज ॥ होतायक्षदिन्द्रंहो-
त्रात्सजूर्दिवआपृथिव्याऋतुनासोमंपिबतुहोतर्यज ॥ होतायक्षन्मरुतःपोत्रात्सुष्टु-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भः स्वर्काॠतुनासोमंपिबतुपोतर्यज ॥ होतायक्षद्ग्रावोनेष्ट्रात्वष्टासुजनिमासजूर्दे-
वानांपत्नीभिर्ॠतुनासोमंपिबतुनेष्टर्यज ॥ होतायक्षदग्निमाग्नीध्राहृतुनासोमंपिब-
त्वग्नीद्यज ॥ होतायक्षदिन्द्रोब्रह्माब्राह्मणाहृतुनासोमंपिबतुब्रह्मन्यज । होतायक्ष-
न्मित्रावरुणौप्रशास्तारौप्रशास्त्राहृतुनासोमंपिबतांप्रशास्तर्यज ॥ होतायक्षद्देवं
द्रविणोदांहोत्राहृतुभिःसोमंपिबतुहोतर्यज ॥ होतायक्षद्देवंद्रविणोदांपोत्राहृतुभिः
सोमंपिबतुपोतर्यज ॥ होतायक्षद्देवंद्रविणोदांनेष्ट्राहृतुभिःसोमंपिबतुनेष्टर्यज ॥
होतायक्षद्देवंद्रविणोदामपाद्धोत्रादपात्पोत्रादपान्नेष्ट्रात्तुरीयंपात्रममृक्तममर्त्यमि-
न्द्रपानंदेवोद्रविणोदाद्राविणोदसःस्वयमायूयाः स्वयमभिगूर्याः स्वयमभिगूर्तया
होत्रयॠतुभिःसोमस्यपिबत्वच्छावाकयज ॥ होतायक्षदश्विनाध्वर्यूआध्वर्यवा-
हृतुनासोमंपिबतामध्वर्यूयजतम् ॥ होतायक्षदग्निंगृहपतिंगार्हपत्यात्सुगृहपति-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्त्वयाग्नेयंसुन्वन्यजमानस्यात्सुगृहपतिस्त्वमनेनसुन्वतायजमानेनाग्निर्गृहपति-
र्गार्हपत्याहतुनासोमंपिबतुगृहपतेयज ॥ होतायक्षदग्निंपुरोळाशस्यजुषतांहवि-
र्होतर्यज ॥ होतायक्षदिन्द्रंहरिवाँइन्द्रोधानाअत्तुपूषण्वान्करम्भंसरस्वतीवान्भार-
तीवान्परिवापइन्द्रस्यापूपः ॥ माध्यन्दिनस्यसवनस्यपुरोळाशाँइन्द्रःप्रस्थितां
जुषाणोवेतुहोतर्यज ॥ होतायक्षदग्निंपुरोळाशानांजुषतांहविर्होतर्यज ॥ होता
यक्षदिन्द्रंमाध्यन्दिनस्यसवनस्यनिष्केवल्यस्यभागस्याचारंपातारंश्रोतारंहवमा-
गन्तारमस्याधियोवितारंसुन्वतोयजमानस्यवृधम् ॥ ओभाकुक्षीपृणतांवार्त्रघ्नं
चमाघोनंचेमेअस्मैशुक्रामधुश्चुतःप्रस्थिताइन्द्रायसोमास्तांजुषतांवेतुपिबतुसोमं
होतर्यज ॥ होतायक्षदिन्द्रंमरुत्वन्तमिन्द्रोमरुत्वाञ्जुषतांवेतुपिबतुसोमंहोतर्यज॥
होतायक्षदादित्यान्प्रियान्प्रियधाम्नःप्रियव्रतान्महस्वसरस्यपतीनुरोरन्तरिक्षस्या-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ध्यक्षान्त्स्वादित्यानवोदधदस्मैसुन्वतेयजमानायकरन्नेवमादित्याजुषन्तांमदन्तां
व्यन्तुपिबन्तुसोमंहोतर्यज ॥ होतायक्षदग्निंछागस्यहविषआददद्यमध्यतोमेदउ-
द्भृतंपुराद्वेषोभ्यःपुरापौरुषेय्यागृभः ॥ घसन्नूनंघासेअज्राणांयवसप्रथमानांसुम-
क्षराणांशतरुद्रियाणामग्निष्वात्तानांपीवोपवसनानांपार्श्वतःश्रोणितःशितामतउ-
त्सादतोङ्गादङ्गादवत्तानांकरदेवाग्निर्जुषतांहविर्होतर्यज ॥ ( होतायक्षद्वनस्पति-
मभिह्रिपिष्टतमयारभिष्ठयारशनयाधित॥यत्राग्नेराज्यस्यहविषःप्रियाधामानि
यत्रसोमस्याज्यस्यहविषःप्रियाधामानियत्राग्नेश्छागस्यहविषःप्रियाधामानियत्र
वनस्पतेःप्रियापाथांसियत्रदेवानामाज्यपानांप्रियाधामानियत्राग्नेर्होतुःप्रियाधा-
मानितत्रैतंप्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद्रभीयांसमिवकृत्वीकरदेवंदेवोवनस्पति-
र्जुषतांहविर्होतर्यज ॥ होतायक्षदग्निंस्विष्टकृतमयाळग्निरग्नेराज्यस्यहविषःप्रिया-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

धामान्ययाट्सोमस्याज्यस्यहविषः प्रियाधामान्ययाळग्ने श्छागस्यहविषःप्रिया-
धामान्ययाड्वनस्पतेः प्रियापाथांस्ययाट्देवानामाज्यपानांप्रियाधामानियक्षद-
ग्नेर्होतुःप्रियाधामानियक्षत्स्वंमहिमानमायजतामेज्याइषकृणोतुसोअध्वराजा-
तवेदाजुषतांहविर्होतर्यज ॥ ) होतायक्षदिन्द्रंहरिवांइन्द्रोधानाअत्तुपूषण्वान्करम्भंसरस्वतीवान्भारतीवान्परिवापइन्द्रस्यापूपः । तृतीयस्यसवनस्यपुरोळाशाँ
इन्द्रःप्रस्थितांजुषाणोवेतुहोतर्यज ॥ होतायक्षदग्निंपुरोळाशानांजुषतांहविर्होत-
र्यज ॥ होतायक्षदिन्द्रंतृतीयस्यसवनस्यऋभुमतोविभुमतोवाजवतोबृहस्पतिवतो
विश्वदेव्यावतःसमस्यमदाःप्रातस्तनाअग्मतसंमाध्यन्दिनाःसमिदातनास्तेषांस
मुक्षितानांगौरइवप्रगाह्यावृषायस्वायूयावाहुभ्यामुपयाहिहरिभ्यांप्रप्रुथ्याशिप्रे-
निष्यृथ्यऋजीषमिमेअस्मैतीव्राआशीर्वन्तःप्रस्थिताइन्द्रायसोमास्तांजुषतांवेतु



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पिबतुसोमंहोतर्यज ॥ होतायक्षद्देवंसवितारंपरामीवांसाविषत्पराघशंसंसुसावि-
त्रमासाविषद्दस्मैसुन्वतेयजमानायकरद्देवंदेवःसविताजुषतांमदतांवेतुपिबतुसो-
मंहोतर्यज ॥ अग्निमद्यहोतारमवृणीतायंसुन्वन्यजमानःपचन्पक्तीःपचन्पुरोळा-
शान्गृह्णन्नग्नयआज्यंगृह्णन्त्सोमायाज्यंबध्नन्नग्नयेछागंसुन्वन्निन्द्रायसोमंभृजन्हरि-
भ्यांधानाःसूपस्थाअद्यदेवोवनस्पतिरभवदग्नयआज्येनसोमायाज्येनाग्नयेछागे-
नेन्द्रायसोमेनहरिभ्यांधानाभिरघत्तंमेदस्तः प्रतिपचताग्रभीदवीवृधत्पुरोळाशैर-
पादिन्द्रःसोमंगवाशिरंयवाशिरंतीव्रान्तंबहुरमध्यमुपोत्थामदाश्रौद्दिमदाँआनळ
वीवृधताङ्गूषैस्त्वामद्यर्षआर्षेयऋषीणांनपादवृणीतायंसुन्वन्यजमानोबहुभ्यआ-
संगथेभ्यः ॥ एषमेदेवेषुवसुवार्यायक्ष्यतइतितायादेवादेवदानान्यदुस्तान्यस्मआ
चशास्स्वाचगुरस्वेषितश्चहोतरसिभद्रवाच्यायप्रेषितोमानुषःसूक्तवाकायसूक्ताब्रू३

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

हि॥ धानासोमानामिन्द्राद्धिचर्पिबचबष्धान्तंहरीधानाउपऋजीषंजिघ्रतामारथ
च्चर्षणेसिश्चस्वयत्त्वापृच्छाद्विषन्पतीःक्कामीमदथाइत्यस्मिन्त्सुन्वतियजमानेतस्मै
किमरात्थाःसुष्ठुसुवीर्यंयज्ञस्यागुरउद्दचंयद्यद्दचीकमतोतोतत्तथाभूद्धोतर्यज॥ हो-
तायक्षदश्विनासोमानांतिरोअह्न्यानांत्रिर्वर्तिर्यातंत्रिरिहमादयेथामुतोतुरीयंनास
त्यावाजिनायधेनुःसजूरग्नीरोहिदश्वोघृतस्नुःसजूरुषाअरुणीभिःसजूःसूर्यएतशेन
सजोषावश्विनादंसोभिःकरतएवाश्विनाजुषेतांमदेतांवीतांपिबतांसोमंहोतर्यज॥
होतायक्षदश्विनासरस्वतीमिन्द्रंसुत्रामाणंसोमानांसुराम्णांजुषतांव्यन्तुपिबन्तुम-
दन्तुसोमान्सुराम्णोहोतर्यज। होतायक्षत्प्रजापतिंमहिम्नोजुषतांवेतुपिबतुसोमं
होतर्यज ॥ ६१ ॥ हरिः ॐम् ॥ इति प्रैषाध्यायः समाप्तः ॥

॥ इति परिशिष्टानि समाप्तानि ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# प्रसिद्धिलेखः

| | मूल्यरूपकाणि |
|---|---|
| शाकलर्ग्वेदसंहिताभाष्यं श्रीमद्विद्यारण्यमुनिविरचितं—विद्वद्भिः संशोधितं पुस्तक ( बुक् ) रूपेण मुद्रितम् .... .... .... .... | ५० |
| शाकलर्क्संहिता परिशिष्टसर्वानुक्रमसहिता विद्वद्भिः संशोधिता .... | ४ |
| कृष्णयजुर्वेदीयतैत्तिरीयसंहिता—विद्वद्भिः संशोधिता .... .... | ३ |
| ऐतरेयब्राह्मणं—विद्वद्भिः संशोधितम् .... .... .... | २॥ |

एतानि पुस्तकानि मोहमय्यां (मुम्बै) तत्त्वविवेचकमुद्रणयन्त्रालये लभ्यन्ते ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

